इह मो तमसंगहे संवसामो अन्धकारके ।
अन्धाणां पिव संवासो तथैवं प्रतिभायति

श्वश्रु नामाह ॥

यदा द्वादशवर्षन्ते पुत्रं द्रक्ष्ये प्रजापति ।
तदा द्रक्ष्यथ अन्योन्यं देवा मे उपयाचि

सुदर्शना आह ॥

पापकं पुनरार्या च देवाणामुपयाचितं ।
दीर्घरात्रं न द्रक्ष्याम अन्यमन्यसमागमं ॥

देवीये कौतूहलमुत्पन्नं राजं पश्यितुं ॥ सा दानि श्वश्रुं विज्ञपेति ॥ श्वश्रु नां आह ॥ पुत्रि श्वुवे ते दर्शनं दत्तं पश्याहि ॥ अलिन्दाये कुशद्रुमो राजाकृत्वा राजासने उपविशापितो । कुशो पि छत्रं धारेति कुमारा पि अमात्या पि नैगमजानपदा पि स्वकस्वकेषु आसनेषु उपविष्टा ॥ सुदर्शना राजं पश्यित्वा सर्वां च परिषदं तुष्टा छत्रधारं दृष्ट्वा मनसं प्रतिहतं ॥ सा दानि सुदर्शना श्वश्रुमाह ॥ शोभनो राजा शोभना राजकुमारा शोभना च परिषा छत्रधारो पुनरदेशियो । एतेन ताये सराजिकाये परिषाये श्री उपहन्यति । यदि एष छत्रधारो अत्र न दृश्ये एवमेषा परिषा सराजिका शोभेय ॥ श्वश्रु इमामाह ॥ मा पुत्रि एवं जल्पाहि न त्वमेतस्य छत्रधारस्य माहात्म्यं जानासि । महात्मा एष

1. B iha mottamasaṁgehe saṁvâsâ°. — 2. B °bhâsati ‖. — 3. BC çvaçruram âha ‖. — 4. B °varshâ te pu° C °varshâṇi putram okshe prajâpatiḥ |. — 5. B tathâ dra° C °drakshatha anyonyaṁ evaṁ me u° B °devaṁ me u° BC °citaṁ |.

7. B °punar âcâryâ ye de° C °r âryyâ ye de°. — 8. C digharâtraṁ° BC °anyamanyaṁ sa°. — 9[1]. C °jaṁ paçyatu yathâ mama |. — 9[3]. B çvaçru naṁ âha ‖ C çvaçruram âha ‖. — 10[1]. C putrî suve naṁ darçanaṁ ca paçyehi | B °çuve naṁ darçanaṁ detum paçyahi |. — 10[2]. B °kuçodrumo râjâ kṛitvâ râ° C °drumo râjâsa° BC °çayito |.

11. BC °chatraṁ dhâ° B °râ pi atyâ pi nai° C °tyâ yi nai° BC °kasvake âsa° C °vishṭo |. — 12. B °jaṁ paçyatvâ° BC °sarvaṁ ca pari° shṭâ chatradhâ° B °manase prati° C °manase pravihṛitaṁ ‖. — 13. C °çvaçruram âha ‖. — 14. BC çobhanâ râjâ (C °jâ kuço) çobhanâ (B °nâ râjâ) kumâ° B °shâ | chatradhâ° C °shâ chatradhâ° BC °kshiyo e°. — 15[1]. BC °nyati ya°. — 15[2]. C °esha cchatradhâ° B yadi eshaḥ cchatradhâ° BC °bheya çva°.

16[1]. BC çvaçrume âha. — 16[2]. BC °cchatradhâ°. — 17. C °çilavâṁ mahâtmâ esho çilavâṁ mahâdha °yaṁ sarvaṁ su°.

महाबलो एषो श्रीमां महाधनो एतस्यानुभावेन वयं सर्वे सुखिता ॥ सा दानि प्रणयगता राजानमाह ॥

न नूनं त्वं लभे अन्नं लोकस्मिं छत्रधारकं ।
याहृशो ते अयं देव अहिरीको अनोत्रपो ॥

राजा आह ॥

किन्नु रूपेण [262b] कल्याणि अपि चायं महाबलो ।
महाबलो ति कृत्वान एषो स्माकं हि रोचति ॥
किं नु रूपेण कल्याणि अपि चायं महाधनो ।
महाधनो ति कृत्वान एषो स्माकं हि रोचति ॥
किं नु रूपेण कल्याणि अपि चायं शूरो सिया ॥
स शूरो इति कृत्वान एषो स्माकं हि रोचति ॥
किं नु रूपेण कल्याणि अपि चायं सुशीलवान् ।
सुशीलवानिति कृत्वान एषो ऽस्माकं हि रोचति ॥
किं नु रूपेण कल्याणि अपि चायं महास्वरो ।
एतस्य अनुभावेन वयं सर्वे जीवामथ ॥
सुखमित्रो च मे सहायो प्रियो प्राणसमो च मे ।
एतस्य मे विनाभावे उभये ऽपि न भवेमथ ॥

देवी दानि सर्वो च अन्तःपुरो पद्मसरः प्रेक्षितुं गता ॥ तत्र राजा प्रकृत्येव पद्मसरमोतरित्वा आसति । देवी ओतीर्णमात्रा तेन गृहीता । देवी जानति द-

1. B °gatâ || râ°. — 3. B na nutaṁ alabhe° C °naṁ alabhe° BC °chatradhâ°. — 4. C °riko apatrayo | .

6. BC °balo ti kṛi°. — 7. BC ti kṛitvâ esho°. — 8. C ki nû rû° BC °peṇa api° C °hâdha ti kṛi° B °dhano kṛi°. — 9. B kṛitvâna° C ti kṛitvânaisho 'smâ° BC °smâkaṁ ro°. — 10. C kiṁ nû rû° B °yaṁ suçuro ti çyaçuro kṛi° C °yaṁ suçûro kṛi°.

11. B çyaçûro kṛi° C kṛitvâ çureti paçya naisho° BC °sho 'smâkam ro°. — 12. C kiṁ nû rû° B °lyâṇi api° C °çîlavân iti kṛi° B °vân su°. — 13. B suçalavâṁn iti° C ti kṛitvâ e° BC °kaṁ ro°. — 14. BC °svaro e°. — 15. BC etasyânubhâ° C °vena veyaṁ° BC °yaṁ jîvâ°.

16. B sukhaṁ mitrâ ca me° C sukhaṁm ivâ ca me° BC °hâyâ ca pri° B °ṇasamâ ca me | C °ṇasamâ ca re | . — 17. BC °bhâvo u°. — 18¹. B °ni sarvâ ca° C °ni sarvâñ ca antaḥ padmasaro pre° BC °tuṁ etâ | . — 18². BC °pratikṛityo(C °tya) ca pa° B °dmasarom o° C °dmasaro ca otari°. — 19¹. C devim otîrṇnamâtâ te° BC °hîtâ de°. — 19². C deviṁ jânati | uda° BC °hîtâni.

कराचसेन गृहीता ति ॥ अन्तःपुरिकाहि पुष्पवृष्टी पि मोचिता ॥ राजा आह ॥

अगमासि देवी उद्यानं वापिपद्मिनिप्रेक्षिका ।
न मे पद्मानि आनेसि न खु ते हं प्रिये प्रियो ॥

देवी आह ॥

अगमं देव उद्यानं वापियोदके स्नायितुं ।
पिशाचं अद्दर्शि तत्र मूर्छिता प्रपते भूशं ॥
यो च ते छत्रं धारेति यो च पद्मवने अभू ।
सब्बे एकिना स्त्रिया जाता तादृशमस्य लक्षणं ॥

देवी च अपरकालेन अन्तःपुरेण सार्धं आम्रवनं प्रेक्षिका निर्गता ॥ राजा प्रकृत्येव आम्रवनं गत्वा आम्रउद्याने स्थितः ॥ तत्र तेन देवी अण्वन्ती गृहीता ॥ देवी जानति वनराक्षसेन गृहीता ति । अन्तःपुरिकाहि पुष्पवृष्टि पि मोचिता ॥ राजा शयनगृहे देवीं आह ॥

अगमासि देवि आम्रवनं वर्धमानं निरीक्षिका ।
न मे आम्राणि आनेसि न खु ते हं प्रिये प्रियो ॥

देवी आह ॥

अगमं देव आम्रवनं वर्धमानं निरीक्षिका ।
पिशाचं अद्दर्शि तत्र मूर्छिता प्रपते भूशं ॥

1. C °vṛishṭi hi mo° B °shṭi hi mo°. — 2. B °va padmaniprekshikâ | C °vâ padm̃anim̃ prekshitâ | . — 3. C °ni âsanesi na khu te ham̃ priyo priye | . — 5. B âgamâ devam̃ udyânam vâ pi codaka snâpitum̃ pi° C âgamo de° vâpiyodaka snâpitum̃ | .

6. C °cam̃ adarçi tatra° B °ddarçî | tatra°. — 7. C °cchatra dhârayati° B °chatram̃ dhâ ° bhû ma° C °bhût ‖ . — 8. C anye ekinâ jâ° B °ekinâ jâ° C °dṛiçam̃ asya°. — 9[1]. BC devîya(C °yo') para ° C°pureṇa âmra ° kshitâ ni°. — 9[2]. B °pratikṛitye câmravanam̃° C °pratikṛityeçvam̃ câmravanam̃° B °âmlaüttayena sthi° C °mraüttâyena sthi°. — 10[1]. B tatrâ tam̃ de ° ṇvati gṛi° C °tra tâm̃ devî aṇvêti gṛi° BC °hîtâ tu sâ°. — 10[2]. *Omis dans* BC.

11[1]. B sâ antaḥ° C sântaḥ° BC °vṛishṭi hi mo°. — 11[2]. C ° jâ samayenagṛihe devîm âha ‖ . — 13. C °si davîm âmravanam̃ marddham[illegible] nirîkkâḥ tena âmrâṇi âne° B °nirîkshitukâmena âmra° C °ham̃ priyo priye ‖ .

16. B agamâ de° C agamo devî â ° rîkshikâ BC °kâ p[illegible] — 17. C °cam̃ tatra addarçi mû° B °ddarçî ta°.

मन्ये एषिणा स्त्रिया जाता यो तव छत्रं धारये ।
यो च पद्मवने आसि यो च आम्रवने अभू ॥

हस्तिशाला दानि आदीप्ता । राजा स्वयं कच्छं बन्धित्वा हस्तिनो मुंचति । असिना बन्धनानि छिन्दति पटलानि बाह्यतोमुखं क्षिपति ॥

नारायणसंघटनो राजा बलेन हस्तिनः ।
पाणिना गृह्य क्षिपति हस्तामोचिता दीप्तका ॥

अन्तःपुरिका राज्ञो वर्णं भाषन्ति । अहो राज्ञो पराक्रमो ति । अन्यतरापि कुब्जा राज्ञो वर्णं भाषति ।

सिंहासुपीठो बलवां शोभे सुविपुलो महां ।
खे चन्द्रो इव आभाति समन्तपरिमण्डलं ॥
चकोरताम्रनयनः कामदेवो व शोभति ।
हस्तिनो मोक्षये राजा स्थामोपेतो नरर्षभः ॥

राजा आह ॥

भद्रिका खु अयं कुब्जा या राजानं प्रशंसति ।
[263a] काशिकानि ते वस्त्राणि ददामि चतुरो अहं ॥
महेन्द्रकराजधीता राजानं दृष्ट्व दुःखिता ।
अयं नाम मम भर्ता एवंरूपो ति (शोकिता) ॥

1. BC [illegible]ye e° B °nâ striyo jâ° C °nâ strîyo jâtâḥ yo tava cchatra dhâ° B °cchatraṁ dhâ° BC °raye yo ca°. — 2. B °âsi | yo ca â ° ne abhûḥ | C °bhûtaḥ ha°. — 3[1]. BC °ptâ râ°. — 3[2]. C °stinâ muṁ°. — 4. BC asinâ baṁdhanâ° C °cchidanti pa°. — 5. B °saṁghatano râ ° stinaḥ pâ° C °saṁghaṭṭano ° stino pâ°.

6. C °hya kshiyanti no mokshitâḥ âsiptakâto a° B °panti hastinâ mokshitâ | âlittakâto a°. — 7[2]. C °krameti. — 7[3]. B °râjñâ va° C °varṇṇa bhâ°. — 9. BC siṁhâsupîṭhâ ba° C °çobhate vi° B °bhe vi ° hâṁ mukhaṁ candro°. — 10. B mukhaṁ candro va â° C sukhaṁ candraiva âbhâshati sa° B °laṁ cako°.

11. C cakolatâ ° deva ca ço° B °devî ca ço°. — 12. C °kshato râ ° petâ nararshabho ||. — 14. BC °drikâ ca (B ° kâ da) vayaṁ kubjâ yo râ° C °prasaṁçati | B °ti kâci°. — 15. C kauçikâni ca va°.

16. C °râjâ driçyanti duḥ°. — 17. BC ayaṁ mama bha° C °rttâ caivaṁ rûpeti marddakarâ° B °po ti madra°.

मद्रकराजधीता आह ॥

न भाषन्तीये कुब्जाये जिह्वाये अस्ति छेदको ।
सुतीक्ष्णेन शस्त्रेण या राजानं प्रशंसति ॥

कुब्जा आह ॥

प्रतितर्जेन्ति राजानो बन्धेन च वधेन च ।
तस्मास्य वर्णं भाषामि रक्षं जीवितमात्मनो ॥

देवी आह ॥

न पश्यामि न द्रक्ष्यामि को अर्थो जीवितेन मे ।
अद्यैवाहं गमिष्यामि पुरा प्राणा जहन्ति मे ॥
सा दानि कुपिता देवी मद्रकराजस्य आत्मजा ।
कुब्जाद्वितीया यानेन स्वकं ज्ञातिकुलं गता ॥

मातापि पुत्रशोकेन तालयष्टीव यथा भूम्यां निपतिता ।

सा च सालस्य व यष्टि छिन्ना परशुना यथा ।
एवं मेदिनियं पति पुत्रशोकसमन्विता ॥

राजा भार्याशोकदुःखितो गन्तुकामः भार्यामन्वेषितुं माता दुःखिता राजानं कुशं गाथाये प्रत्यभाषति ॥

अहो मम मन्दभाग्याये अर्थो पर्याहृतो कुले ।
पंचशतयोजनातो महेन्द्रधीता इहागता ॥
शतुभया जनपदा नित्यं कम्बलप्रावृता ।
लूहभुक्ता लूहकर्मा कथं मार्गं गमिष्यसि ॥

1. C marddakarâ°. — 2. B °bhâsiyâye ku° C° shiyâye ku ° hvâye asicche° B ko ti°. — 3. BC tîkshṇe° ṇa yo (C °ṇa ca yo ca) râjâ°. — 5. C °no bandhanena ca bandhanâ | .

6. BC tasyâsya varṇṇa bhâshâṇi(C °shyâmi) rakshe ji°. — 8. BC °çyâmi na tâ(C °na ca)kshyâ° B °ko rtho jîvitatena me | C °jîvitona me | . — 9. BC °prâṇâm̃ jaha°. — 10. BC °pitâ duhitâ madra° C °tmajâḥ || .

11. C °tiyâ jâne° B °gato | . — 12. BC râjânam âmantrayati mâtâ BC °soke ° layashṭi ca bhagno || abhû° B °layashṭhîva bhagnâ abhû°. — 13. C sâ ca çâlasya yashṭi°. — 14. BC evam̃ ceta(B °ceya)siyam̃ vâlî(C °li) pu° C °çoko sa°. — 15. C °jâ bhâryyâye sokaduḥ° B °çokeduḥ° BC °maḥ || bhâ° C °ryyâm̃ anyeshi°.

17. C aho ma manda ° ye anartho paryâhṛitah kalîm̃ | B °ryâkṛito kali | . — 18. BC °çatâjâtâ mahe° B °hâgataḥ | . — 19. C °kambaraprâ° B °vṛitâ lû°. — 20. B lûhabhaktâ divâ karmâ katham̃° C lûhakarmâ divâ karmâ katham̃°.

राजा आह ॥

नृत्यगीतवाद्यक्रीडाये चित्तमायाश्रतेन वा ।
विविधेहि उपायेहि वृत्तिं कल्पेयमात्मनो ॥

राजा भ्रातरं कुशक्रुमं राज्ये स्थापयित्वा अमात्याणि संदिशित्वा

मातरमभिवादयित्वा कृत्वान च प्रदक्षिणं ।
ततो वीणां गृहीत्वान प्राक्रमे उत्तरामुखः ॥

सो दानि मद्रकविषयस्य अन्यस्मिं ग्रामे वासोपगतो अन्यतराये वृद्धाये प्रतिश्रयं दिन्नं । कुशो च तत्र ग्रामे वीणावाद्येन आराधितो । तस्य प्रभूतं खाद्यभोज्यं दिन्नं महन्तं गोपिटकं खज्जकस्य महती च अलिन्दा भक्तस्य दधिघटकं च नानाप्रकाराणि च व्यंजनानि ॥ वृद्धाये एतद्भूषि । एष असौ एकमाहारं कृत्वा श्वुवे गमिष्यति एतं च मम द्वैमासिकं भक्तं भविष्यति । कुशेनापि वृद्धाये आलापं आनयन्तेन तं खज्जकस्य गोपिटकं एकदुकाये सर्वं खादितं । सा च ओदनस्य महती अलिंदा यो अष्टानां वा नवानां वा तण्डुलओदनानां पाको सर्वं भुक्तं । तानि च व्यंजनानि तं दधिकलशं । वृद्धा निराशा ॥

अविधाविधं प्रविशिय अन्तको इह आगतो ।
पिशाचो मानुषरूपेण यो [263$^{b}$] मामिच्छति खादितुं ॥

सर्वे वसन्ति ग्रामस्मिं ये च कायेन पापका ।
एकरात्रिं वसित्वान श्वुवे यंसामि अम्बिके ॥

2. B note vâdya° C nâṭe vâdya° BC °ḍaye cyutamâ(B °mâpa)gatena va |. — 3. B lpetham â° C °lpeshyam âtmane |. — 4. B mâjaprâtaraṁ ku° taram avâdayitvâ kṛitvâ a pra° C °taram avâditvâ ca pra°.

6. C tato dhiṇâṁ grahetvâna° BC °na parâkra°. — 7. C °drakarâjâvishayasya anyaarasmiṁ grâ° gataḥ anyatarasmiṁ anyatarâye vṛiddhâye praviçayaṁ°. — $8^1$. BC °dhito asya°. — $8^2$. C °nnaṁ | mahântaṁ gepiṭakaṁ svajja° liṇḍâ bha° dhighaṭaṁ ca nâ° BC janâni vṛi°. — $10^2$. C esho 'sau° BC °mishyati || etaṁ° C °dvaumâ°.

11. C °dukârye sarvaṁ°. — 12. C °hatiṁ aliṁṇḍâṁ ashṭâ° B °hatim aliṁdâ ye ashṭâ° daṇânâṁ pâ°. — 13. BC °çaṁ vṛi°. — 15. B °prativeçikâ anta° C °praviveçitâ || antako hâgato pi iccha° B °ihâgato |.

16. B °yo mâṁ itthaṁm icchati°. — 18. B sarve ca santi° C sarvo ca santi grâmemiṁ° B °smiṁ yecche kâ° BC °ye va pâ°. — 19. BC °vaçitvâ°.

सो दानि एकरात्रोषितो कन्यकुब्जं गतः मालाकारमल्लीनो तथा पूर्वं शिल्पिकजाती पश्चात् महानसं । राजापि आराधितो यावद्राज्ञो प्रियो ति कृत्वा अन्तःपुरिकाहि अन्तःपुरं प्रवेशीयति क्रीडापनको भविष्यति ॥ अन्तःपुरिका पि महेन्द्रकस्यापि धीतरो पृष्ठेन वहति । सुदर्शनापि तेन वाहियमानेन असाता वारेति ।

किं दानि अहं करोमि कस्य वा गरहाम्यहं ।
उत्त्रासयति मान्दृष्ट्वा समुद्रे राक्षसो यथा ॥
किं दानि अहं करोमि कस्य वा गरहाम्यहं ।
उत्त्रासयति मान्दृष्ट्वा मृगी भ्रान्ता व लुब्धकं ॥
अनूर्जको येनागतो रात्रिंदिवमनुव्रजन् ।
गच्छ कुश स्वकं राज्यं नेच्छामि दुर्वर्णं अहं ॥

राजा आह ॥

अहं सुप्रियो ते स्वामि सुश्रोणि तनुमध्यमे ।
तव कामेहि महन्तं राज्यं पि नाभिप्रार्थये ॥
नाहं गमिष्यामि सुसंवृतोऽ
दिशां न जानामि यतो स्मि आगतो ।
संमूढरूपो विचरामि लोके
मत्तो स्मि कामैः मृगमन्दलोचने ॥

देवी आह ॥

विक्षेपो तव चित्तस्य यं अनिच्छन्तिमिच्छसि ।
अकामां राज कामेसि नैतत्पण्डितलक्षणं ॥

1. C °tropito kaṁnyakubjaṁ gato mâlâkâraṁ mûle allî° B °kâlam allî ° jâti | pa° C °çcata mahâ° BC °saṁ râ°. — 2. BC °priyeti kṛi° C °tvâ antaḥpuri ° ḥpurikaṁ praveçiya krî° B °ḍâyanako°. — 3. BC °rikâhi pi mahe ° ro prishṭena vâha(C °haya)nti | . — 4. C °amâtâ vâ°. — 5. B °dânahaṁ° C °dânyahaṁ°.

6. C uttrasyaṁti mâṁ dṛishṭvâ° C °mudrarâ°. — 7. B °dânahaṁ° C °dânyahaṁ° BC °romi kasya kasya°. — 8. B uttrasishyasi mâṅ dṛi° C uttrasyaṁti ca mâṁ dṛishṭvâ° BC °ntâ ca lu°. — 9. B anurjjako yo na hato° C anujjako na hato° B °divâ evam anuvrajanto | C °vrajet | . — 10. BC °kuça kuça sva ° mi duvarṇṇam ahaṁ | .

11. B aṁgâraḥ râjâhaṁ su° C agâro râjâhaṁ su°. — 12. BC haṁ sukri(C °krî)yate° C °te suçreṇi° B °me suçoṇi°. — 13. B °mehi samantato râjyaṁ° C °mehi samantato jyaṁ vinâ pi pârthivo | B °rthayet | . — 14. B na gami saṁhato ru° C °saṁhato ca di° BC °nâmi | ya° C °to smiṁ âgato B °smin âgato saṁmû°.

16. B °mûḍharûḍho yo vi° C °mûḍho yo ca vi° B °mi | lo° C °ke mahatto° BC °tto smiṁ kâmaiḥ(C °mair ) mṛiga° B °loca ‖ C °locanaiḥ ‖ . — 19. B °po bodhitâ ci ° C °po bodhicittesya yam anicchanti icchasi | B °ntî icchasi | . — 20. BC akâmaṁ bhaja kâme°.

कुशो आह ॥

अकामां वा सकामां वा यो नरो लभते प्रियां ।
लाभं तव प्रशंसन्ति अलाभो तव पापको ॥

देवी आह ॥

प्रभोसि स्त्रीसहस्रं पि एकरात्रेण रामितुं ।
एकस्त्रियाये कामेन महदुःखं निगच्छसि ॥

राजा आह ॥

नेतं दुःखं प्रजानामि यशस्विनी वर्णलाभिनी ।
यं सुचीर्णं ब्रह्मचर्यंसि त्वं मे भार्या भविष्यसि ॥

देवी आह ॥

धिगस्तु ते ब्रह्मचर्यं अधन्तो भोतु पापकं ।
सुनखीं वा शृगालीं वा परत्र कामयिष्यसि ॥

कुशो आह ॥

मा एवं अवच भद्रे सुश्रोणि तनुमध्यमे ।
श्रमणा पि हिमे साधु ब्रह्मचर्येण शोभते ॥
ते पि भद्रे सुचीर्णेन इह चीर्णेन शोभते ।
स्वर्गेषु उपपद्यन्ति त्रिदशे कामकामिनो ॥
तन्ते भद्रे अहं ब्रूमि सुश्रोणि तनुमध्यमे ।
न ते अन्यो पति अस्ति इति सिंहस्वरो कुशः ॥

देवी आह ॥

सचेद सत्यं वचनं नैमित्तानां भविष्यति ।
न ते भार्या भविष्यामि कामं छिन्दाहि खण्डशः ॥

2. BC akâmam̃ vâ sakâmam̃ v°. — 3. B °praveçanti°. — 5. C °sram̃ ti ekarâtre râmi°.
6. C °mahaduḥkham̃°. — 8. BC etam̃ duḥ ° jâpati(C °tiḥ) ya ° rṇṇavilobhinîm̃(C °nim̃) | . — 9. B tuvam̃ sucî° C tuvam̃ sutîrṇṇam̃ bra°.
11. C adhigantu te bra°. — 12. C °khîm̃ ca çrigâlâm̃ vâ pa ° marishyati ‖ . — 14. B °suçoṇi° C °suçreṇi° BC °me çra°.
16. C °dre sutîrṇṇena i°. — 17. B °ntis trida°. — 18. B °ham̃ krumi suçoṇi° C °ham̃ kruhi suçreṇi°. — 19. B °te anyâ pa° C °kuço ‖ .
21. C sacaivam̃ satyavacanam̃ naimittino bha° B °nam̃ nemittena bha° BC °shyasi | .
22. B °shyâma kâ° C °shyâma cchandâhi ca akhaṇḍaçaḥ ‖ .

राजा आह ॥

नाहं छेत्तुं तवेच्छामि सुश्रोणि तनुमध्यमे ।
अच्छिन्ना चैव त्वं भ[264ª]द्रे मम भार्या भविष्यसि ॥
महान्तं च मम राज्यं बह्वश्वं बहुपौरुषं ।
अनन्तबहुप्रदानं बह्वाच्छादनभोजनं ॥
सो हं राज्यं च राष्ट्रं च च्छोरयित्वा इहागतः ।
तव कामेहि समन्तराज्यं न अभिप्रार्थये ॥

देवी आह ॥

पाषाणे खनसे कूपं कर्णिकारेण कर्णिकां ।
वातं जालेन बन्धेसि अनिच्छन्तीं यमिच्छसि ॥
अकान्तो किं कामयसि . . . . . . . . . ।
गच्छ कुश स्वकं राज्यं आत्मानं किं किलामसि ॥

राजा आह ॥

न एतं किलमथं मह्यं ब्रह्मचर्यं इदं मम ।
परत्र मे तुवं भार्या मह्यं भद्रे भविष्यसि ॥

देवी आह ॥

एतत्तव ब्रह्मचर्यं उपात्तं भोतु पापकं ।
सुनखीं वा शृगालीं वा गर्दभीं वाभिप्रार्थये ॥
राजपुत्रो शूरो वीरो युद्धस्मिं अप्रतिपुद्गलो ।
कुशो ऽयमारूढप्रज्ञो इदं वचनमब्रवीत् ॥

2. BC °cchetum tave° C °suçreṇi° B °çroni tanu°. — 3. BC acchiṁnâ ye ca te bha°. — 4. BC °jyaṁ ca bahvaçvabahupau°. — 5. C °husaṁpadâṁ ca bahvâ°.

6. B °jyaṁ ca râshṭhraṁ ca ccho° C °jyaṁ ca râshṭaṁ ca ccho °gato ‖ . — 7. C °samanṭehi râ° BC °jyaṁ nâbhi°. — 9. C pâkhâne khanase kupaṁ° BC °kâro ca ka°. — 10. C °anicchintîham icchati | B °nicchantima icchasi | .

11. C akrânto krântam âyâmi suçreṇi tanumadhyame ‖ B °nto kâttamâyasi gaccha°. — 12. BC °râjyam âtmâ° B °naṁ kilâmayi ‖ C °naṁ ca kilâyasi ‖ . — 14. B °lâmarthaṁ mahyaṁ° C °lâmatha râjyaṁ bra° B °mama pa°. — 15. C °me turvo bhâryâ mahyaṁ tvaivaṁ bha° B °hyaṁ bhavi°.

17. C evaṁ te bra° B etan te bra° BC °ryaṁ aprâptaṁ bho°. — 18. C °gâlâṁ vâ garddabhaṁ vâbhi° BC °rthaye ‖ kuço âha ‖ . — 19. B °çûro yu° C °yuddhesmiṁ vâdipuṁgavo | B °smiṁ puṅgavo ku°. — 20. BC kuço sarûḍha su(C °sa)prajño ida va°.

गच्छन्तो ते अहं भद्रे सुश्रोणि तनुमध्यमे ।
निगडेहि ते बन्धेयं किन्ते कुर्यु सजातयो ॥

देवी आह ॥

तमेव धर्ममपराध्य यन्ते उत्पादितं पुरा ।
तमेव धर्मं स्मरमाणो त्वं मे बन्धितुमिच्छसि ॥

राजा आह ॥

प्रभोमि ते अहं भद्रे बन्धयित्वा प्रजापती ।
येनिच्छकं प्रचारेतुं पिता ते किं करिष्यति ॥
प्रभोमि स्त्रीसहस्रं पि एकरात्रेण रालितुं ।
त्वमेव मे वरं भद्रे शुद्धदन्ति प्रजापति ॥

देवी आह ॥

जानामि ते महाराज बलवां त्वं नरर्षभ ।
दुर्वर्णो दुर्दृशो चासि दुःस्पर्शो च महीपति ॥
स्थूलोष्ठो स्थूलशिरो च स्थूलाङ्गो सि महोदरो ।
पश्यितुं त्वां न इच्छामि मा आत्मानं किलामये ॥

देवी आह ॥

एते उद्विद्धप्राकारा अट्टाट्टालककोलका ।
यो वा वहति नागेहि एतं हि वारयन्ति ते ॥

एते शक्तीहि युध्यन्ति तोमरेहि शरेहि च ।
असीहि च सुतीक्ष्णेहि त्वां लभेयं प्रजापति ॥

1. C °suçreṇi °. — 2. BC °galehi B °nte kuṛya sajñâtayo ‖ C °sajñâtaye | . — 4. C °dharmaṁ parâ° BC °parâdhyâya yan te (C °ya yataṁ) u°. — 5. C taṁ dharmma sma° ṇo yaṁ evamadhitum i° B °yaṁ evaṁ dhikshatum icchati ‖ .

7. BC bhavâmi ° C °patiḥ | . — 8. BC yenicchikaṁ pravâretu pi°. — 9. BC prabho (B °bha)smiṁ strîsahasresmiṁ e°. — 10. C tvam evaṁ me °dantî pra° BC °jâpatiḥ ‖ .

12. BC °rshabhaḥ | . — 13. B duvarṇṇo durdṛço vâsi nisparço ma° C °si nisparço si ma° BC °patiḥ | . — 14. C sthuloshṭo sthulaçiro sthulâṅgo so ma° B °loshṭo sthûlaçiro sthûloṅgo se ma° C °daraḥ | . — 15. C °çyitu tvâṁ ° B °tuṁ tvâ na°.

17. C °prâkâre aṭṭatalakashodakâ B °aṭṭaṭṭâlakakho°. — 18. C yo vahanti nâ° B °hanti nâ° BC °ete yo vahane yute | . — 20. C ete çaktihi yu ° marehi ca çarehi ca | . — 21. C asihi ca su° BC °kshṇehi hatvâ labhe° C °bheya prajâ ‖ pa° BC °patiḥ râ°.

राजा दानि महेन्द्रको धीतरं परिभाषति ॥ किं त्वं तादृशं राजानं यस्य प्रतिराजानः त्रसन्ति तं छोडित्वा इहागता ॥ वयं चाहं सप्तहि राजानेहि उपरुद्धो तव कृतेन । एषो दानि ते एतेषां सप्तानां राज्ञां सप्त खण्डानि कृत्वा दास्यामीति ॥

सा दानि भीता राजधीता अश्रुकण्ठा रुदन्मुखी ।
वारिपूर्णेहि नेत्रेहि इदं वचनमब्रवीत् ॥
सचेत् मामम्ब घातेन्सुः क्षत्रिया दूरगामिनो ।
अस्थीनि मे समानेत्वा एकमन्ते दहापये ॥
एकमन्ते दहापेत्वा एलूकं मम कारये ।
एलूकं मे करित्वान कर्णिकारमारोपये ॥
ततो च पुष्पिते सन्ते वसन्तस्मिं हिमात्यये ।
ततो मे अम्बे स्मरेयासि एवंवर्णा ममात्मजा ॥
ततो च सो राजपुत्रो युद्धस्मिं कोविदो कुशो ।
संरूढप्रज्ञानो अस्ति समादाय इति स्थिता ॥
इमां बन्धित्वान भागभागं करित्वान क्षत्रिया ।
संग्रामं च ददित्वान ततः क्षेमं भविष्यति ॥

1[1]. B °shatim̃ | . — 1[2]. C °tirâjâna trasanti ca tam̃ cchoḍayitvâ ihâgatâḥ | B ° cchoḍ-ḍitvâ °. — 2. B °ddho kṛi° C °ddho tuvam̃ kṛi°. — 3. B °râjña sapta kha°. — 5. BC sâ dâni bhîtâ râjâ dâ(C °jâ tâ)ni ete (B °ni râjâ) parigharshayanto(B °ghaparyante) dṛidhâ aṭṭâlakhoṭakâ(B °kâ | ) kum̃jarehi va mantre(C °hi ramante)hi ete paçya prajâpati(C °tiḥ) | bhîtâ açruka(C °kam̃)ṇṭhâ rudanmukhî(B °khî | ) vâripûrṇṇehi netrehi idam vacanam abravît | asinâ vâ yathâ çûrâ(C °ro) yathâ te kuṭṭaye aham̃ | sacet(C °sarve) tuvam̃ na gacchesi kuça râjaniveçanam̃ | sarve ca râjâno trasanti(C °nti bhîtâ tatra) nararshabhoḥ(C °bhaḥ) | sace(B °cet) tuvam̃ âcare(C °reyam̃) kumâram̃ priyadarçanam̃ | jâtikulînam̃(C °mam̃) ksha[264b]triyam̃ parasenâpramarddakam̃ | kuçasya rûpam̃ prajñânam̃(C °tam̃) gatâye yamaçâsanam̃ | tato sâ râjadhî°.

7. B sacet sam̃ amba ghâtetsuḥ ksha° C sacet so adya ghâtetsuḥ kshetriyo dû°. — 8. B °ni mânsam âne° C °ni hi samâne ° nte dadâpayet | . — 9. C °dadâpe° BC °tvâ elukam̃ ° B °kâlaye | . — 10. BC elukam̃ me ka ° rṇṇikârontaropayet | .

11. BC °shpitam̃ santam̃ va° C °vasantesmim̃ himâraye | B °himânaye | . — 12. C °smarayâsi evam̃varṇṇa mamâ°. — 13. B tato ca râja° C tato sau ca râ ° tro yuddhesmim̃ ko° B °yuddhosmi°. — 14. B sarûpaprajñâno âsi âdâyam utthito || C sarûpaprajñânom̃ âsi samâdâpaya iti sthita | . — 15. C imâm̃ vam̃shito ca pushpitam̃ samantam̃ smim̃ himânaye | tato me ambe smarayâsi evam̃varṇṇa mamâtmajâ | tato sau ca râjaputro yuddhesmim̃ kovide kuço | surupaprajñâno âsi samâdâya iti sthitaḥ | imâm̃ vam̃shitvâ ca bhâgam̃° B imam̃ âbadhitvâ ca bhâga° C °triyâ na dadi°.

16. BC na daditvana tataḥ kshe(C °tato ksha)mam̃ bhavishyasi | .

ततः च (सा राजपुत्रं) क्षत्रियाणी यशस्विनी ।
वेपमाणेहि गात्रेहि इदं वचनमब्रवीत् ॥
सत्यन्ते प्रतिजानामि राजपुत्र महाबल ।
यदि ते कोचिदपराधे आचरे व नराधिपः ॥

कुशो आह ॥

अहं पि ते प्रजानामि सुदर्शिनि प्रजापति ।
यदि ते कदाचिद्द भूयो पि आचरेयं इतो परं ॥
ततो प्रजापतीमाता अश्रुकण्ठी रुदन्मुखी ।
वारिपूर्णेहि नेत्रेहि इदं वचनमब्रवीत् ॥
को नु वेणो वा पाणो वा अथ वा पुनर्पुक्कसो ।
किस्य राजकुले जातो किं स्य कुर्वन्ततो मुखं ॥

सुदर्शना मातरमाह ॥

न एष वेणो न चण्डालो अथ न पुनः पुक्कसो ।
पुत्रो इक्ष्वाकुराजस्य तं त्वं दासो ति मन्यसि ॥
मयूरक्रौंचाभिरुतं वादित्रध्वनिनिषेवितं ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
शंखपाण्डरसंकाशं नारीसंघनिषेवितं ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
सुवर्णभाजनशताकुलं नारीसंघसमाकुलं ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥

1. C tato ca râjaputra kshatriyâṇi ya° B tataḥ ca kshatriyâni ya yaça°. — 2. BC vepa-(B °ya)mânihi gâ°. — 3. B saptan te° C satyam̃ te pra° B °balaḥ | . — 4. B yadi te kâcid a° C °te kâçcid aparâdhe âcâre vâ na° B °âkâre vâ na°.

6. BC ° patiḥ | . — 7. C °bhûye pi â°. — 8. BC °patimâ° C ° tâ ayam̃ râjaputra mahâbalaḥ | yadi te kâçcid aparâdhe idam̃ vacanam abravît | tato prajâpatimâtâ açru° B ° khî vâ°. — 10. B °veṇo tapâ° C °punaḥ pukkaso | B °kkase | .

11. BC kasya râ° B °jâto kasya kurvanano mu° C °jâto kasya pûrvamano mu°. — 13. B °lo arthe na punaḥ° C °tha na punar pukkaso | . — 14. C °sya na tvam̃° B °tvam̃ doso°. — 15. B °câpiru°.

16. C katri° B °triyaç ca ku° C °sphitam̃ na tvam̃° B °sphitam̃ na tvam̃°. — 17. C °ni-sevitam̃ | . — 18. C kshetriyasya ku sphitam̃ na tvam̃° B ° sphitam̃ ta tvam̃°. — 19. C *omet les lignes 19-20 et 1-2 de la page suivante.*

षष्टि नगरसहस्राणि स्फीतं राज्यमकण्टकं ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
षष्टि नागसहस्राणि सुवर्णालंकारभूषिता ।
सुवर्णच्छदमातंगा ईषादन्ता समुन्नताः ॥
आरूढा ग्रामणीयेहि खड्गतोमरपाणिभिः ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
षष्टि रथसहस्राणि सर्वनन्दिघोषालंकृता ।
अयोसुबद्धनेमिका द्वीपिचर्मपरिच्छदा ॥
आरूढा ग्रामणीयेहि चापहस्तेहि वर्मिहि ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
षष्टि अश्वसहस्राणि आजानेया हयोत्तमाः ।
सुवर्णमे[265a]खलाधरा खलीनरतनामया ॥
आरूढा ग्रामणीयेहि कशाहस्तेहि वर्मिभिः ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
विंश ब्राह्मणसहस्राणि राज्ञो भुंजन्ति नित्यकं ।
दिवा वा यदि वा रात्री सदा सत्कृतपूजिता ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥
कुमाराणां शता पंच उपेता मातृपितृतो ।
क्षत्रियस्य कुलं स्फीतं तं त्वं दासो ति मन्यसि ॥

राजा दानि शृणोति देवीये जामाता आगतो त्ति इहैव अन्तःपुरे ति ॥ [illegible] दानि भीतो च यं बाहिरे राजेहि भयं भवेया इमं अभ्यन्तरे भयं जातं [illegible] न्ति ॥

1. B shashṭiṁ naga ° akaṇṭhakaṁ | . — 3. C shash[illegible] nà° B shashṭiṁ nà ° varṇṇaṁkà° C °rṇṇàkàra°. — 4. C °rṇṇacchandamàtaṅgà i ° dgatà | . — 5. B °gràmaṇiye° BC °khadgato° C °pàṇihi | .

6. C °sphiṭaṁ na tvaṁ° B °sphitan taṁ tvaṁ°. — 7. B shashṭiṁ ratha° C shashṭhi ratha°. — 8. BC suba° C °dvîpidvîpicarma°. — 9. B °gràmaṇiye ° stehi carmihi° C °rmibhiḥ | . — 10. C kshetri ° laṁ sphiṭaṁ na tvaṁ° BC °nyati | .

11. C shashṭhîm açva ° ttamo | . — 12. B °mekhalodha° C °mekharàdharo kha° BC °khalli ca ratanà°. — 13. B °gràmaṇiye ° stehi carmihiḥ | . — 14. B kshetri° C °sphiṭaṁ na tvaṁ° B °nyati | . — 15. C viṁçad bràhma° BC ° bhuṁjati ni°.

16. BC °trau yadà °. — 17. C °sphiṭaṁ na tvaṁ°. — 18. C °çatàṁ paṁ°. — °sphiṭaṁ na tvaṁ°. — 20[1]. C ràjà çri ° gato ti ihaivaṁ antaḥ° B °gato nti || iha antaḥ°. — 20[2]. C °bhîto ca yo vàhi° B °bhîto ca yo vàhirahitvà johi bhayaṁ bh BC °veyà || i ° taṁ ku°.

21. C °shyasi.

किं त्वमुत्तमरूपा व विक्षिप्तचित्ता च भामसि ।
कीदृशो सो कुशो कस्मादनुपश्येमद्य वयं ॥

देवी आह ॥

एष देव अभ्यन्तरतो वेश्मअन्तरे तिष्ठति ।
आगच्छति राजपुत्रः अभिनिष्क्राम्य तिष्ठति ॥
तस्यासौ वचनं श्रुत्वा भीतो संविग्नमानसो ।
प्रियअनुमतैकांसो कृत्वा अंजलिं तिष्ठति ॥
त्वं क्षमाहि महाराज त्वं क्षमाहि नरर्षभ ।
न वयमेवं जानाम सिंहस्वर इहागतः ॥
त्वं क्षमाहि महाराज त्वं क्षमाहि नरर्षभ ।
न वयमेवं जानाम महास्वर इहागतो ॥
त्वं क्षमाहि महाराज त्वं क्षमाहि महारथ ।
न वयमेवं जानाम मंजुस्वर इहागतो ॥

राजा दानि पुनर्धीतरं परिभाषति ॥ एत्तको कालो मम जामातु आगतस्य न च त्वं मम निवेदेसि ॥ सो दानि तत्र्य शतपाकेहि सहस्रपाकेहि च तैलेहि अभ्यंगित्वा स्नापितो महारहेहि विलेपनेहि विलिप्तो महारहेहि आच्छादनेहि आच्छादितो आमुक्तमकुटो पंचाङ्गिकेन तूर्येणोपस्थिहीयति ॥ कुशो श्वशुरं आह ॥

यत्तका ते हस्ती अश्वा च सर्वेषां कर्णा पिधीयन्तु ।
मा मम सिंहनादेन स्वकं सैन्यं भजिष्यति ॥
क्षिप्रं च अश्वा योजेथ सुवर्णउच्छ्रितध्वजां ।

1. C °tvam uttama[illegible] vi° B °rûpâ vâ kshi°. — 2. C °driço râjâ ku° BC °kuço asmâ° C °paçya yathâ ‖. — [illegible] esho devam abhyantarako ve° B ° devam abhya° BC °venda antaratishthati |. — 5. C antaram tishthati | â° B agacchantiko râ° C °cchantiko râjaputro a° B °trah aci nishkra°.

7. BC priyam anu(C °yam ma)matam ekâm° C °kâmço kri ° shthato |. — 8. C tvam kshamâhi mahârâ° B °rshabhah |. — 9. BC [illegible]yam jânâma mahârâja sim° C °gata |. — 10. BC tam ksha° C °ja tam ksha° BC °rshabhah |.

11. B na vayamm eva jâ° C na vayam eva jâ°. — 12. BC tam ksha° C °ja tam ksha°. — 13. B °vayam eva jâ° C °vayamm eva jâ° gatah ‖. — 14[2]. C °gatasâ tatra tvam° B °sya tatra tvam° C °vedayasi |. — 15. BC °bhyangi(C °nge)tvâ snâ° C °pito mahârahehi lepanehi vili ° hehi âcchoditah âmu ° sthihiyati ‖.

17. C °çvaçruram âha ‖. — 18. C yattakâs te asti açvâ° B °hasti açvâ° BC °sham madhusitthena karnno pidhiyantu mâ°. — 19. C °nyam bhamjishyati |. — 20. BC °pram caraçva° C °yojyetha suvarnnam ucchri°.

अन्तेपुरातो निर्यासि राज्ञो महेन्द्रस्य पश्यतो ॥
सो सिंहनादं नदति शूरो युद्धस्मिं ईश्वरो ।
सिंहनादं नदित्वान परिगृह्णति क्षत्रिया ॥

ते दानि सप्त क्षत्रिया जीवग्राहं गृह्य श्वशुरस्य उपनीपिता ॥ ते राजा आहन्सुः ॥ किं करोमीति ॥ कुशो आह ॥ पादेहि मम श्वशुरं उपनीयथ वृद्धिं च करोथ ॥ ते दानि पादेहि च महेन्द्रकस्य राज्ञो अभिगता जयवुद्धि च से कृता ॥ महेन्द्रकराजा आह ॥ किं करोमि त्ति ॥ कुशो आह ॥ करिष्यसि [265b] मम वचनं ॥ श्वशुरो आह ॥ करिष्यन्ति ॥ अस्ति ते धीतरो सुवर्णसहस्रमण्डितां कृत्वा एकमेकस्य राज्ञो एकमेकां धीतरं देहि जामातरो भोन्तु । सुखं अनुद्विग्नं वसिष्यसीति ॥ राज्ञा महेन्द्रकेण तेषां क्षत्रियाणां सर्वेषामेकमेका सुवर्णसहस्रप्रतिमण्डिता धीता दिन्ना सुवर्णस्येव पुत्रपौत्रा ॥ ते दानि स्वकानि राज्यानि विसर्जिता ॥

गतेषु सप्तराजानेषु श्वशुरं कुशो आमन्त्रयति ॥ अहमपि गमिष्यामीति ॥ महेन्द्रकराजा आह ॥ पुत्रि सुदर्शने त्वं एवं पराक्रमयुक्तं राजानं शूरं दीर्घदर्शिनं इक्ष्वाकुपुत्रं महाबलं महाकुलीनं अरहसे प्रेम्णेन च गौरवेन च उपस्थिहितुं । यं नूनाहं सपरिवारो सर्वो च अधिष्ठानो संशयातो मोचितो ॥ साधूति धीता पितुः वचनमश्रोषीत् ॥ राजा दानि महेन्द्रको महता सत्कारेण प्रभूतं रत्नदानं दत्वा जामातुकस्य सुदर्शनाये च चतुरंगबलकायं संनाहयित्वा विसर्जिता ॥

सो दानि यथेच्छिते जनपदे आवासितो । तत्र पद्मसरे स्नानाय ओक[illegible] ॥

1. C antaḥpu ° ndrakasya° B °ndraka pa° BC °paçyato | . — 2. B [illegible] nanade° C °nàde nanade çûro yuddhesmiṁ içva°. — 3. B °daṁ nadatvâ° C °daṁ nâdetvâna pratigri° BC °gṛihnati ksha°. — 4[1]. BC °pta kshetri° B °grâmaiṁ gri[illegible] C °grâhe gṛihya çvaçrura° B °çvasrura°. — 4[2]. C °hatsuḥ | . — 5[1]. B °romi ti | . — 5[3]. B °çvasruraṁ° C °çvaçruraṁ°.

6. C °dehi mahe° B °gato | jayavuddhi ca so kṛitâ || C °gato jayaṁvuddhi ca so kṛito | . — 7[1]. C °râjaç ca âha || . — 7[2]. BC °minti || . — 8[1]. B çvasruro° C çvaçruro°. — 8[3]. C °kâṁ dhîtarâṁ dehi jâmâtaro bho°. — 9. BC °anuvignaṁ° C °vaçishyati iti | B °shyatiti || . — 10. C râjño mahe° BC °teshân te ksha° C °ṇḍitâṁ kṛitvâ ekamekasya râjño dhitaraṁ dinnâ | su° BC °pautraṁ || .

11. C °jyâṇi vi° BC °rjjitâni. — 13[1]. C °râjeshu sapta râjâneshu°. — 13[2]. C °gamishyâmiti || . — 14. B °rçane te evaṁ pa° C °rçane taivaṁ pa °jânaṁ ikshvâ° lînaṁ aharase premnena ca gaureṇa ca u°. — 15. B °haṁ ahañ ca sapari° BC °ro satvâ ca adhi°.

16. C sâdhu ti pituḥ° C °vacanaṁ ma°. — 17. BC °bhûtaṁ ratnaṁ(C °tanaṁ) dânaṁ datvâ jâ° B °rçaṇâye ca || catu°. — 19[1]. BC °yathecchito ja°.

तत्र स्नापयन्तेन आत्मनो प्रतिबिम्बं दृष्टः । स तं दुर्वर्णं दुर्दृशं आत्मनो प्रतिबिम्बं दृष्ट्वा दुर्मनो आसि । तेन हि मे महेश्वरकराजधीता परिभवति । आत्मानं उपक्रमिष्यामि ॥ सो दानि शक्रेण देवेन्द्रेण समन्वाहृतो ॥ अयं कुशो बोधिसत्वो दुर्वर्णताये आत्मानमुपक्रमितुकामः तेन तस्य ज्योतीरसएकावलिका मणिरत्नं दिन्नं । इममाबन्धाहि ततः ते रूपेण सर्वजम्बुद्वीपे समसमो न भविष्यति । यत्र काले पौराणिकं रूपं अभिकांक्षसि तदेतं मणिं पाणिना पिधिययासि ॥ सो दानि तेन मणिरत्नेन आबद्धेन राजकुलं प्रविशति दिव्येन रूपेण प्रतिहाररक्षेण च वारि मा प्रविशाहीति ॥ सो दानि आह ॥ अहं कुशो ति ॥ प्रतिहाररक्षो आह ॥ भद्रं कुशो राजा एकुशो रूपेण भवेया ति ॥ राज्ञा कुशेन तं मणिरत्नकं हस्तेनापिहितं । तस्य यथापौराणं वर्णरूपं संवृत्तं ॥ प्रतिहाररक्षो दृष्ट्वा मूर्धेन प्रणिपतितो ॥ सो दानि प्रविष्टो देवीय मूले ॥ देवी आह ॥ मा राजकुलं अवमर्दाहीति । किस्य त्वं राजकुलं प्रविष्टो ॥ सो आह ॥ अहं कुशो ॥ देवी आह ॥ कुशो राजा [266a] एकुशेन रूपेण भवेया ॥ राज्ञा तं मणिं हस्तेन अपिहितं । सो दानि यथापौराणो संवृत्तो ॥ देवी आह ॥ अतो मणितो हस्तमपनेहि ॥ राज्ञा मणितो हस्तो अपनीतो दिव्यं चास्य पुनः रूपं संवृत्तं ॥ आत्मानमेव उपसंक्रमितुकामो । ततो मे इमं ज्योतीरसं नाम मणिरत्नं शक्रेण दिन्नं ॥ कुशो राजा आगच्छतीति श्रुत्वा एकूना पंच कुमारशतानि अमात्या च भटबलाग्रं च सर्वे प्रत्युद्गता । पश्यन्ति कुशं राजं हस्तिस्कंधवरगतं दिव्येन रूपेण आदित्यमिव प्रतपन्तं चतुरंगेन बलकायेन संपरिवृतं आगच्छन्तं । ते दानि न प्रत्यभिजानन्ति ।

1[1]. C °ntena âvâsito âtma ° mbaṁ drishṭvâ so taṁ°. — 1[2]. C so taṁ duvaṇṇadriçaṁ° BC °shṭvâ dutmano° B °âsi te°. — 2[1]. B °bhavanti | . — 2[2]. BC âtmanaṁ°. — 3[1]. B °samaṁnvâ° B °hṛitaḥ. — 3[2]. B °duvarṇṇa° C °rvarṇṇo durdṛiço tâye â ° sya jyotirasa°. — 5[1]. BC imaṁ âba° C ° hi | tato te rûpeṇa sarvaṁ ja ° samasamâ no bha° B °jambûdvîpe samasamâ bha°. — 5[2]. C yaṁ kâlaṁ paurâṇakaṁ rû° B ° kâlaṁ pau° BC ° kshasi | tad etaṁ maṇi pâ ° B ° pithiye° C °pihiye°.

6. B °ni te maṇi° BC °çati | di° B °pena prati° C °ksheṇa dhâri mâṁ pravi° B °ksheṇa ca dhâri mâ pravisâhiti || . — 8[2]. BC ° ti pra °. — 8[3]. B ° tiârarakshо °. — 9[1]. BC bhadre ku° B ° dṛiçâ rû° C °rûpeṇâ na bha°. — 9[2]. C °steṇa âhitaṁ | . — 10[2]. B °na prapatito |.

11[2]. C °ha | ato maṇito hastam apanehi râjâ maṇihasto | mâ râ°. — 12[3]. BC ° kuço jâ. — 13[1]. BC râjâ(C °jo) edṛi° B °ṇa ca bha°. — 13[2]. B râjâ taṁ maṇi ha° C râjânaṁ maṇiratnaṁ na âpi° B ° apyihitaṁ | . — 14[1]. BC sâ dâ° C °râṇaṁ saṁ°. — 14[3]. B ato maṇîto ha° C ato maṇîto divyaṁ°. — 15[1]. B râjâ maṇîto ha°. — 15[2]. B âtmânaṁ me u ° C âtmânam evaṁ u ° kâmaḥ.

16[1]. B tataḥ so imaṁ° C °jyotirasaṁ°. — 16[2]. C ° gacchantiti çru ° kûnapaṁcaçatâ kumârâmâtyo bhaṭṭabalâgraṁ sarvaṁ pra° B °tyutagatâ pa°. — 18. BC °nti | ku° C °stindhavara ° tyam iva prapatantaṁ | catu° B °tapantaṁ | catu° C °barakâ°. — 19. B °nti te°.

तेन दानि राज्ञा मणि हस्तेन पिहितो यथापौराणं च रूपं संवृत्तं ततः च सर्वे प्रविपतिता ॥ एवं महता समुदयेन कुशो राजा देवीये सुदर्शनाय सार्धमन्तःपुरं प्रविष्टो ॥

एवं पुण्यवतो अर्था सर्वे भोन्ति प्रदक्षिणाः ।
यथा नाम कुशो भार्याय ज्ञातीहि च समागतो ॥
पूर्वेनिवासं भगवान्पूर्वेजातिमनुस्मरन् ।
जातकमिदमाख्यासि शास्ता भिक्षूणमन्तिके ॥
ते च स्कन्धा ते धातवः तानि आयतनानि च ।
आत्मनो यं च भगवानेतमर्थं वियाकरे ॥
भगवराग्रस्मिं संसारे यत्र मे उषितं पुरा ।
कुशो अहं तदा आसि सुदर्शना यशोधरा ॥
माया माता तदा आसि महानामो महेन्द्रको ।
मारो अन्यतरो राजा एवं धारेथ जातकं ॥
एवमिदमपरिमितं बहुदुःखं
उच्चनीचचरितं पुराणं ।
विगतज्वरो विगतभयो अशोको
स्वजातकं भाषति भिक्षुसंघमध्ये ॥

भिक्षू भगवन्तमाहन्सुः ॥ कस्य भगवन् कर्मस्य विपाकेन कुशो राजा दुर्वर्णो दुर्दृशो प्रतिकूलदर्शनो अभूषि ॥ भगवानाह ॥

भूतपूर्वं भिक्षवः अतीतमध्वानं नगरे कम्पिल्ले पंचालजनपदे दुवे काश्यपतिका तरुणाभिरूपा परस्परानुरक्ता भवेन्सुः । ताये इस्त्रिये सादृशं तत्र गृहं निःशल्यकं

1. C te dâni râjñâm maṇihastena âpihi ° rāṇām ca °rū° B °rûpa saṁ° B °ttaṁ | ta° C °ttaṁ | tato ca te sa ° titâḥ | . — 2. B °jâ deye su°. — 5. BC °thâ na me kuço bharttâ jñâ° C °gatâ | .

6. C °nivâsa bhagavâṁ pûrvejâ°. — 7. BC °bhikshusa(C °kshuṇa)mautike | . — 8. C °ndhâs te ca dhâtavaḥ tânyâya° B °tânyâyanatanâ°. — 9. B âtmârthaṁ bha° C âtmânarthaṁ ca bha ° rthaṁ ca vyâkare || B °rthaṁ vyâkaro | . — 10. C °varâgresmiṁ°.

11. B kuço haṁ° C ° âsit | su°. — 12. C °tadâ âsit çuddhodana ikshvâku ca | mahendrako çâkya gopâraḥ mâro sapta râjikâḥ | evam idaṁ aparimitaṁ evaṁ dhâ° B °nâma mahe°. — 14. C °duḥkhitaṁ u° BC °nîyacari° B °naṁ vi°.

16. C vigatabhayo vigatajvaro a° B °açokaṁ sva°. — 18[1]. C bhikshur bhaga° hatsuḥ || . — 18[2]. C °jâ duvarṇṇo durdri ° tikulo da ° bhûmi || . — 20. C °kshavo a ° dhvâne nagaraṁ kaṁpilye paṁcâraja° B °re kaṁpille° C °tikâs taru° B °ṇâhirû° C °sparâgânu° BC °vetsuḥ || .

21. C tâye indriye sâ° B °striye sodri ° tra griha niḥçâyakaṁ° C °grihâni niḥçâpakaṁ° BC °kaṁ tâdriçaṁ siddhaṁ || .

सिद्धं ॥ बुद्धानामनुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ति तूष्णीकशोभना खड्गविषाणकल्पा । एककात्मानं दमेन्ति शमेन्ति परिनिर्वायन्ति ॥ ताये स्त्रियाये तदाहारं सिद्धं ॥ प्रत्येकबुद्धो च तं गृहं प्रविष्टो पिण्डाय तद्रूपाभिरूपो प्रासादिकेन ईर्यापथेन ॥ प्रासादिकाभिप्रसन्ना देवमनुष्याः ॥ तस्या स्त्रियाये प्रत्येकबुद्धं दृ-[266b]ष्ट्वा प्रसादमुत्पन्नं । ताये तस्य प्रत्येकबुद्धस्य पिण्डपात्रो च दिन्नो ॥ सो चास्या कुटुम्बिको प्रविष्टो पश्यति तं च प्रत्येकबुद्धं गृहे भार्यां च ॥ तस्य दानि शंका उत्पन्ना । तरुणो यं प्रव्रजितो मा हैव मे कलत्रा ओलोकिता भविष्यति ॥ सो ताये भार्याये परुषवाचाये आह ॥ भुक्तपूर्वो ते एषो यथा त्वमेतस्य भोजनं देसि ॥ सा आह ॥ शान्तं पापं प्रव्रजितो एषो महाभागः अपूर्वो एषो अद्य गृहं प्रविष्टः प्रसादेन मे एतस्य भिक्षा दिन्ना ॥ ततो सो प्रत्येकबुद्धो तस्य पुरुषस्य च-कुशलं चित्तोत्पादं ज्ञात्वा अनुग्रहार्थं ततो येव गृहातो हंसराजा विय वैहायसं क्रान्तो ॥ तस्य दानि पुरुषस्य तं प्रत्येकबुद्धं वैहायसगतं दृष्ट्वा प्रसादमुत्पन्नं महाभागो अयं ऋषि इति ॥ तेन सा भार्या अनुक्षमापिता प्रणिधानं च उत्पादितं । अन्ये पि मे जाति त्वं भार्या भवेसीति अन्तराष्ट्रं पि गता नान्यस्य वशे वर्तेसि नान्यस्य मम येव त्ति ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन कंपिल्ले नगरे पुरुषो अभूषि येन भार्याये ईर्ष्याप्रकृतेन दुष्टचित्तेन प्रत्येकबुद्धो अभ्याचिक्षितो । कुशो राजा तेन कालेन तेन समयेन कंपिल्लनगरे सो पुरुषो अभूषि ॥ अन्या सा भार्या अभूषि । सा सुदर्शना महेन्द्रनाथधीता ॥ तस्य भिक्षवः कर्मणो विपाकेन कुशो राजा विरूपो अभूषि ॥

कुशजातकं समाप्तं ॥

1. BC °tpâdâ pra(C °dân pra)tye° C °buddho lo° dyati tûshnîshaço° B °nti tushni°. — 2[1]. B °tmânan dameñti ça° C °damenti pari°. — 2[2]. BC °yâye tañ câhâ°. — 3. C °ndâyas tarûnâ° B °kena iryyâ° BC °thena prâ°. — 4[1]. B °kâbhiḥ pra°. — 4[2]. BC °shṭvâ prâsâ °nnañ tâ°. — 5[1]. C tâye tatpratye ° tro ca dinnâ | . — 5[2]. BC °câsya ku° C °viçishṭaḥ | paçya° B °ti | tañ ca° C °bhâryyârtha ca.

6. C °çamktâ u° BC °nnâ ta°. — 7. C °haivañ me ka°. — 8[1]. BC °purushâye abhu°. — 8[2]. BC bhuktapûrvâ ye(C °rvâ te) ete esho(C °shâñ) yathâ° C °demi || . — 9[2]. C °jito esho bhâgo apû° vishto prasâ° B °shṭaḥ praçâde°. — 10. B °rthañ | tato ye gri° C °rthañ | tato gri°.

12. C °tyekambu ° hâyasañ gatañ°. — 13. BC tena so bhâ°. — 14. B °râshṭhrañ pi ga° C °shṭrañ pitâ ga ° sya vaçavartte° BC °rtteti | nânyasya(B °nyatra) mama ye ca (C ° mama eva) nti || .

16[2]. BC °vo asmâkam e° C °lena kâlena tena sa ° rushâ abhû° BC °shi | yena bhâ° B °ryâye irshyâ° BC °bhyârikshito || . — 18. C °kampille naga°. — 19[1]. B anyâ so bhâ°. — 19[3]. C °kshavo karma°. — 21. C iti çrîmahâvastuavadâne kuça°.

भिक्षू भगवन्तमाहन्सुः ॥ कथं भगवं मारो पापीमां भगवतो दुष्करं चरन्तस्य पृष्ठिमेन पृष्ठिमं समनुबद्धो अवतारार्थी अवतारं गवेषी अलभमानो निर्विद्य प्रक्रान्तो ॥ भगवानाह ॥ अन्यदापि मम एषो पृष्ठिमेन पृष्ठिमं समनुबद्धो अवतारार्थी अवतारं गवेषी अलभन्तो अवतारं निर्विद्य प्रक्रान्तो ॥ भिक्षू भगवन्तमाहन्सु ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥ भूतपूर्वं भिक्षवः अतीतमध्वानं ऋषभो गवांपतिः गोगणसमनुबद्धो ॥ तस्य दानि वृषभस्य वृषणा लंबा शिथिला च सो वृषभो लंबितेहि वृषणेहि गोगणस्य पृष्ठिमेन पृष्ठिमं अन्वति ॥ तहिं च अरण्यायतने गिरिको [267°] नाम शृगालः प्रतिवसति ॥ तेन सो वृषभो दृष्टो गोगणेन सार्धं अन्वन्तो लम्बेहि वृषणेहि ॥ सो त[illegible]न पृष्ठिमं बहूनि वर्षाणि समनुबद्धो ॥ तस्य अपरो शृगालो वयस्यो । ते[illegible] गिरिको दृष्टो तस्य वृषभस्य पृष्ठिमेन पृष्ठिमं समनुबद्धो दृष्ट्वा च पुनस्तं गिरिकं गाथाये अध्यभाषति ॥

कति वर्षाणि गिरिक अनुबद्धो सि गवांपतिं ।
मुहुर्मुहुश्च चरसि भीतभीतं च पश्यसि ॥
इमे स्थूला च लम्बा च सुनिबद्धा शिथिला चिमे ।
इमा न पि पतिष्यन्ति ततो ऽभयो भविष्यसि ॥
मयापि समनुबद्धो द्वश वर्षाणि पंच च ।
शिथिला व सुबद्धा च नास्ति सानं पततां भयं ॥

1[1]. B bhikshu bha° C bhikshur bhaga ° hatsuḥ ‖ . — 1[2]. C bhagavan mâro° BC °sya prishṭimena prishṭimaṁ° B °baddho | ava° C °baddhaḥ avatârârthi avatâraṁ gaveshi | B °shî ‖ ala°. — 3[2]. C enya° BC °sho prishṭimena prishṭimaṁ sa ° ddho | avatârârthi(C °rthi) avatâraṁ gaveshi | ala°. — 4. C bhikshur bhaga ° hatsuḥ | B °nsu kadâ°. — 5[1]. B kadâpi° C °gavân ‖ . — 5[3]. BC °vo bhû°.

6[1]. C °kshavo 'ti° B °vaḥ ṭita° C °naṁm ṛishabha bhogavâṁ° B °goganaṁ sama°. — 6[2]. C ° ni vrishatasya° so vrishâ laṁvritehi vrishaṇe° B °so vrisho laṁbitehi vrishaṇe ° sya prishṭimena prishṭimaṁ° C °ṇasya prishṭimaṁ açvati | . — 8. C °ariçyâya ° riko ma çṛi°. — 9[1]. B °rdhaṁ anvati laṁbehi ° C °ṇvati laṁcakehi vṛi°. — 9[2]. BC °sya prishṭimena(C °ṇa) prishṭimaṁ bahû(C °hu)ni°. — 10. C °ro mrigarâjasya te° B °gâlâ vayasyo te°.

11. BC °bhasya prishṭimena prishṭimaṁ°. — 13. C °pati. — 14. C muhumuhu citraçaçiṁ bhîta° B °rmuhuç cit tasasi bhita°. — 15. B imâṁ sthûlâ ca lambâ su° C imâṁ sthulâṁ ca ravâṁ su° BC °baddho çithilâ ca me | .

16. C imâṁ na pi patatishyanti tato bha° B °nti | tataḥ bha° C °shyati ‖ . — 18. C °sti çânaṁ tato bhashaṁ ‖ B °patato bhayaṁ ‖ .

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन वृषभो अभूत् । सो हं वृषभो ऽभूषी ॥ यः गिरिको नाम शृगालो ऽयमेव मारो अभूषि ॥ तदापि अवतारार्थी अवतारमलभन्तो निर्विद्यापक्रान्तः ॥

समाप्तं वृषभजातकं ॥

भिक्षू भगवन्तमाहन्सुः ॥ कथं भगवन्मारो पापीमां न शक्नोति भगवतो ऽवतारमधिगन्तुं ॥ भगवानाह ॥ न भिक्षवो एतर्हिं एव मारो पापीमां न शक्नोति ममावतारं अधिगन्तुं । अन्यदापि एषो मम न शक्नोति अवतारमधिगन्तुं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥ भूतपूर्वं भिक्षवो अतीतमध्वानं अनुहिमवन्ते प्रत्युद्देशे वानरो महान्तं वानरयूथं परिहरति । तहिं च अनुहिमवन्तप्रत्युद्देशे महन्तो उदकह्रदो यत्र वानरयूथं अभीक्ष्णं पानीयं पायको ओतरति । तत्र च उदकह्रदे उदकराक्षसो प्रतिवसति ॥ यो तत्रोदकह्रदे ओतरति पानीयपायो मृगो वा पक्षी वा वानरो वा मनुष्यो वा तं तत्रोदकराक्षसो ओकड्डति ॥ सो पि वानरयूथो तमुदह्रदं पानीयपायो ओतरति ॥ सो दकराक्षसो दकगतो तानि वानराणि निध्यायित्वा अदृष्टो तेहि वानरेहि ततो वानरमेकमाकड्डति ॥ एवं सो दकराक्षसो पुनपुनः यं वेलं ते वानरा उदकपाया ओकस्ता भवन्ति ततो निध्यायित्वा अदृष्टो ओकड्डति ॥ सो दानि वानराधिपतिः यानि वानराणि तत्रोदकह्रदे ओकड्डितानि तानि न पश्यति । तस्यैवं भवति । कहिं ते वानराणि मा अन्यहिं गता भवेन्सु ति । समन्ततो लोकेति न च पश्यति ॥ सो पण्डितो यूथपतिः तेषां [267b] वानराणां [उदकह्रदमोतरन्तानां]

1². C °lu bhiksh[illegible]ḥ yu° B °shmâkam evânyaḥ°. — 2¹. C °bho abhûshi yo gi°. — 2². C yo gi ° gâro a[illegible] evam̃ mâ°. — 3. C tadâpyavatârârthi avatâra ° dyâprakrânto ‖. — 4. C iti çrimahâvastuavadâne vṛishabhajâtakam̃ samâptam̃ ‖ o ‖. — 5¹. C bhikshur bhaga ° hatsu ‖ B °nsuḥ ka°. — 5². C °tham̃ bhagavân mâ ° gato vatâ°.

6¹. B °âha ‖ anya° (8³). — 6². C °rhi evam̃ mâro pâ ° târo dhi°. — 7². C bhikshu âham̃suḥ | .. — 8². C °pi bhavagânâ°. — 8³. BC °vo bhû°. — 8⁴. C °dhvâne anu° B °dhvânam anu° C °tyudeçe° B °ddeçena vânaro° C °ro mahâ | ntam̃ yutham̃ vânarayû° B °haranti | . — 10. BC tahim̃ ca hi° C °tyupadeçe mahânto u ° hrada tatra vâ ° yûtham abhî ° yam̃ pâyo otarati | B °rati | so daka°.

11¹. B *remplace par :* so dakarâkshaso dakagato nâṇi vânarâṇi nidhyâyitvâ adṛishṭo tehi vânarehi | tato vânaram ekadṛiço kaṭṭati | . — 11². C so tatro° B tatra ca uda° C °niyapâyaḥ mṛi ° shyo vâ taḥ uda° B °shyo vâ tatoda° BC °okaṭṭati | . — 13. C °niyam̃ pâyo°. — 14. *Omis par* B. C °rehi | tato ° m ekasâkaṭṭatim̃ | . — 15. C ° kshaso punar-punaḥ° BC °pâyo okastâ bhavanti | tataḥ(C °to) ni ° kaṭṭati | .

16. BC °ṇi tatodakahrade okaṭṭitâ(B °tâni tâ)ni na pa°. — 17. BC °ti ka°. — 18¹. C °râni mâ a° BC °anyehi ga° B °vetsu ti sa° C °vetsuḥ sa°. — 19. C °ṇḍito yutha

येन ईर्येन तं उदकह्रदं पानीयपायका ओतरन्ति तत्र ओतरन्तानां उत्तरन्तानां पादानि प्रत्यवेक्षति ओतरन्तानां वर्धन्ति उत्तरन्तानां परिहीयन्ति । तस्य बुद्धिरुत्पन्ना । अत्र एते ओकड्ढियन्ति दकराक्षसेन ततो न पश्यामि एतेषां । परं मुखेन स्वयमुदकं पिबितुं ॥ यं च तेन दृष्टा ओकड्ढियन्ता तत्रोदके दकराक्षसेन वानरा आणत्ता ॥ गच्छथ अतो नलवनातो नलप्रान्तानि गृह्णथ येनोदकं पास्यथ । ततः दकराक्षसो न शक्ष्यति अवकड्ढितुं ॥ तेहि गच्छिय नलवनातो स्वकस्वका नलप्रान्ता गृहीता दीर्घदीर्घा यथा दूरतो स्थितका उदकं पिबमाना च न दकराक्षसः ओकड्ढेया ति ॥ यं वेलं उदकपायका गच्छन्ति ततो स्वकस्वकानि नलान्यादाय ओतरन्ति ततः दूरतो भोन्ता तेन नलेन उदकं पिबन्ति । न शक्नोति दकराक्षसो भूयो वानरमोकड्ढितुं ॥

ओतरन्तस्य दृश्यन्ति पादानि उत्तरंतस्य न ।
नलेन पानं पातव्यं नास्ति जागरतो भयं ॥

भगवानाह ॥ स्यात्खलु भिक्षवो युष्माकमेवमस्य: स तेन कालेन तेन समयेन यो वानराधिपतिः । अहमेव तदा अभूत् ॥ यो दकराक्षसो अभूदयमेव मारो ऽभूत् ॥ तदापि न शक्नोति मावतारमधिगन्तुं ॥

समाप्तं वानरजातकं ॥

°ntàni yaṁ yena [illegible]eçena tam uda° BC °niyapàyo otaranti(C °raṁti |) tatra° C [illegible]tarantà-nâṁ pâdâ ° tyavekshiti ottarantânâṁ varddha° BC °hîyanti ta°.

2. B °r unpaṁnaṁ atra° C °tpannaṁ ‖. — 3[1]. BC ° okaṭṭiya° C °nti udararà° B °sena | ta ° teshâṁ pa°. — 3[2]. B parâ mukhe° C parân mukhe°. — 4. BC °dṛishṭvo(C °shṭo) okaṭṭiyanto(C °nto |) tatro° C °tro udako udakarâksha° BC °ttâ ga°. — 5. BC °cchatha | a ° nâto nalapotâni gṛihnatha | ye ° B °nodakadaṁ yâsyatha | C °kaṁ paçyatha |.

6[1]. C tato da° B °kshase na ça° C °kshase na çakyaṁtyavakarttituṁ | B °kaṭṭituṁ |. — 6[2]. BC °cchiye nalavanâto svakasvakâ nila(C °ni nara)prâ° C °ntâni gṛihîte dîrgha° BC °pibemâna ca ma dakarâ ° kaṭṭiyâti |. — 8. BC °cchanti | tato sva° C °otalaṁti ‖ tato dûrâto bhonto te° BC °banti na°. — 9. B °knoti | da° C °râso bhû ° naro o° BC °kaṭṭituṁ.

11. C ottarantasya na dṛishṭvâni pâdâni narena pâ° B °ni utarantasya na dṛishṭâni pâdâni |. — 12. C narena pâṇiṁ pâtavyaḥ nâ° B °lena pâṇiṁ pâtavyaṁ° BC °jâgalato°. — 13[2]. C °shmâkam evam asyâd anyaḥ ° B °dhipatir aham e° C °dhipar aham e°. — 14[1]. BC °m evan tadâ°. — 14[2]. C yo uda ° so 'bhûd ayam evaṁ mâ° BC °ro 'bhût |. — 15. C °ti sma ava°.

16. B iti çrîmahâvastuavadâne vâ° kaṁ samâptaṁ ‖.

भिक्षू भगवन्तमाहन्सुः ॥ कथं भगवाननुत्तराये सम्यक्संबोधिये प्रज्ञाविशेषेण मारस्य विषयातो अतिक्रान्तो ॥ भगवानाह ॥ न भिक्षवो एतरहिमेवाहं प्रज्ञाविशेषेण स्वस्तिना मारस्य विषयातो अतिक्रान्तो अन्यदापि अहं वानरभूतो सन्तो प्रज्ञाविशेषेण एतस्य मारस्य विषयातो मूर्धे पादां कृत्वा स्वस्तिना अतिक्रान्तो ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं अनुहिमवन्ते वानरो महान्तं वानरयूथं परिहरति ॥ सो दानि ग्रीष्माणां पश्चिमे मासे तेन वानरयूथेन सार्धं ततो हिमवन्तातो नानाप्रकाराणि फलानि परिभुंजित्वा तृषितो उदकह्रदं पानीयपायो आगतो ॥ सो च उदकह्रदो अभ्रितकूलो नास्ति ओकाशो ओतरितुं नत्थितुं ॥ सो यूथपतिः तस्य उदकह्रदस्य समन्तेन विकाशं मार्गन्तो अनुक्रमन्तो पानीयतृषाये ततः उपलानां पटां छित्वा तहिं उद[268ᵃ]कह्रदे पतितं ॥ तस्य च उदकस्य अभ्यन्तरे अजगरस्य बिलं । तत्र बिले महान्तो अजगरो प्रतिवसति ॥ तत्र तस्य प्रतिवसन्तस्य अल्पकिसरेण आहारो उत्पद्यति । यो तत्र उदकपायो आगच्छति मृगो वा पक्षी वा वानरो वा तं सो भक्षयति ॥ तेन सो वानराधिपो तहिं उदके पतन्तो दृष्टो । तेन ततो बिलातो ग्रीवा निष्कासिता एतं वानरं ग्रहीष्यामीति । तं वानरं गाथाये अध्यभाषे ॥

उत्पन्नो पुनरयं भक्ष्यो वानरो वनगोचरो ।
यो यं बिलान्ते कूलस्मिं पानीयं पातुमिच्छति ॥

सो दानि वानराधिपो तहिं उदके न किंचित्प्रतिष्ठां लभति यत्र पादं प्रतिष्ठा-

1¹. C atha khalu bhikshur bhaga ° hatsuḥ ‖ — 1². C °bhagagan anu° B °râye bodhiye pra° C °râye saṃmya° BC °abhikrânto ‖ . — 2². BC °vâham anuttarâye bodhiye prajñâviçeshena sva° C °to abhikrânto | anya° B °shena | e° C °to mûrddhnena pa° BC °stinâ vishayâto ati(C °abhi)krânto ‖ . — 5¹. C bhikshu âhatsuḥ ‖ . — 5². B °kshavaḥ ati° C °kshavo ati°.

6. BC atîta° C °vantâṃ vânarayû°. — 7. C °mâsena vânarayû ° vantato nânâpra ° hrade pânî°. — 9¹. C °hrade nîlâmbhakulo° B °do nirabhrakû° C °ço ottari°. — 9². C so yuthapatis tasya udakahra ° trishâto tatah° B °trishâye | tatah° BC °lânâṃ paṭaṃ cchitvâ tahiṃ°.

11. BC °galasya vi°. — 12¹. C tasya tatra° BC °galo pra°. — 12². B °lpaviçalena° C °lpakiçalena â°. — 13. B °cchati | mṛi° BC °pakshi vâ vâna°. — 15¹. C °bilanto grîvâ nishkârito e° BC °raṃ grahe(C °grihi)shyâmi | so ajagaro taṃ vânaraṃ grahe(C °grihi)shyâmi°. — 15². B °gâthâ a°.

17. C °tpanne pu° BC °bhaksho vâ°. — 18. B °biran tu kû° C °bilan tu kûlesmiṃ. — 19. B °vânarodhi° BC °kiṃcin pratishṭhâṃ(B °shṭâṃ) labhati | ya° B °pratishṭâpe° C °krame | B °krameyaṃ | .

पित्वा उदकातो स्थलं क्रमेय । तथैवं भवति । यथैव अजगरो ग्रीवां पराङ्मुखां परिवर्तेय एतस्य एवाजगरस्य मूर्ध्ने पादं कृत्वा स्थलं क्रमेयं ॥ सो दानि अजगरं गाथाये अध्यभाषे ॥

अहमेव न ते भक्ष्यो इमा न पश्यसे पृथू ।
यो माममभिमुखं तर्वे यं भाषसि गिरामिमां ॥

तेन दानि अजगरेण येन ते वानरा यूथपतिना उपदर्शिता ततःमुखं से ग्री-[illegible]वर्तिता तानि वानराणि द्रष्टुं । समनन्तरं तेन अजगरेण पराङ्मुखी ग्रीवा परिवर्तिता सो च वानराधिपो तस्य अजगरस्य पराङ्मुखस्य मूर्ध्ने पादं कृत्वा ततः उदकातो लघिना स्थलं प्रक्रान्तो ॥ सो दानि अजगरो तस्य वानरस्य बुद्धिविशेषेण विस्मितो ॥ एतस्य वानरस्य इह उदकह्रदे पादस्य प्रतिष्ठानं नास्ति यत्र पादं प्रतिष्ठापेत्वा इतो उदकातो स्थलं प्रक्रमेय । ततो तेन मम एते वानरा उपदर्शिता.। तथा एव अतो मुखं परिवर्तेति मम च ग्रीवा येन एते वानरा तेन परिवृत्ता । एषो च बुद्धिविशेषेण मम एव मूर्ध्ने पादां कृत्वा स्थले प्रक्रान्तो ॥ सो तं वानराधिपतिं गाथाये अध्यभाषे ॥

लघुं च त्वये क्षिप्रं च निरुद्धं पुनर् चिन्तितं ।
यो मां पराङ्मुखं ज्ञात्वा शूरो वीरो अजायिथा ॥
यस्येमे चतुरो धर्मा वानरेन्द्र यथा तव ।
वीर्यं बुद्धिः स्मृतिः प्रज्ञा सो दुःखमपवर्तति ॥

स्यात्खलु पुनः भिक्षवः युष्माकमेवमस्यादन्यः स तेन [illegible]-

1¹. BC °ti yadye°. — 1². C °dyeshah ajagalo grivâṁ p[illegible]khâṁ parivarttayâḥ | etasya evaṁ ajagalasya mû ° tvâ sthalaṁ°. — 4. B °m ev[illegible] sa te bhakshyâ imâṁ na pa° BC °prithuṁ | . — 5. B so maṁ a° C yo maṁ a° B [illegible]khaṁ arja yaṁ bhâshesi° C °shasi imâṁ girâṁ || .

6. B °galeṇa ye° C °galena yato te vânaraya̋û° B °râ yutha° BC °rçita | tataḥ° C °rttito | tani vâ °shṭuṁ sa° B °rttitâ | tânı °shṭuṁ sa°. — 7. C semantaraṁ tena ajaṁgale parâṁmukhâ grî° B °gare parâ° BC °rttitâ | so° Ç °galasya pa°. — 9. C °galo te °shena vi°. — 10. C °de pâdasya pratısthânaṁ nâstı | yatra pratisthâpayetvâ ıtah udakâto sthalaṁ prakra° BC °krameyaṁ | .

11. BC tato na mama e° C °vânaro u ° rçitâḥ tathâ°. — 12. C °esho a ° varttantâ mama ca° B °rttento mama ca° C °vṛitâ e°. — 13. C °evaṁ mûrddhni pâ°. — 14. C °dhipaṁ gâ° B °dhıpatiyaṁ gâ°. — 15. C laghuṁ ca paryyakshipaṁ nı° B °praṁ ni° C °punaḥ cinti°.

16. C °khaṁ drishṭvâ çûro viro ajânetha ya°. — 18. C °buddhiṁ smṛitiṁ prâjñâḥ so yaṁ duhkha pravarttıtı || — 19 C °khalu bhi°.

हिमवन्ते वानराधिपो अभूषि। सो हं तेन कालेन तेन समयेन वानराधिपो अभूषि ॥ अन्य: स तत्र उद्कह्रदे अजगरो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतो: । [268b] एष भिक्षव: पापीमां मारो तेन कालेन तेन समयेन तहिं उद्कह्रदे अजगरो नैवासिको अभूषि ॥ तदापि अहं एतस्य उद्कह्रदातो बुद्धिविशेषेण मूर्ध्ने पादं कृत्वा स्वस्तिमतिक्रान्त: । एतरहि पि अहं एतस्य मारस्य विषयातो बुद्धिविशेषेणातिक्रान्त: ॥

वानरजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सु: ॥ पश्य भगवान्कथं पुण्यानां वर्णवादी ॥ भगवानाह ॥ न हि भिक्षव: एतरहिमेवाहं पुण्यानां वर्णवादी । अन्यदाप्यहं भिक्षवो पुण्यानां वर्णवादी ॥ भिक्षू आहन्सु: ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षव: ॥ भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे अंजनको नाम राजा राज्यं कारयति कृतपुण्यो महेशाख्यो सुसंगृहीतपरिजनो दानसंविभागशीलो महाबलो महाकोशो महावाहनो । तस्य राज्यं ऋद्धं च स्फीतं च सुभिक्षं चाकीर्णजनमनुष्यं च सुखितजनमनुष्यं च ॥ तस्य दानि राज्ञो अंजनस्य पुत्रो पुण्यवन्तो नाम कुमारो सर्वकालं पुण्यानां वर्णवादी । तस्य दानि कुमारस्य चत्वार अमात्यपुत्रा वयस्या ॥ एको अमात्यपुत्रो वीर्यवन्तो नाम सर्वकालं वीर्यस्य व वर्णवादी वीर्यं लोके अनुत्तरं ति ॥ द्वितीयो अमात्यपुत्रो शिल्पवन्तो नाम सर्वकालं शिल्पस्य व वर्णवादी शिल्पं लोके अनुत्तरं ॥ तृतीयो अमात्यपुत्रो रूपवन्तो नाम रूपस्य वर्णवादी रूपं व लोके अनुत्तरं ॥ चतुर्थो अमात्यपुत्रो प्रज्ञावन्तो नाम सर्वकालं प्रज्ञाये वर्णवादी प्रज्ञा व लोके अनुत्तरं ॥ ते दानि तेन कुमारेण पुण्यवन्तेन उच्यन्ति ॥ नास्ति पुण्येहि समं पुण्यं लोके अनु-

2[1]. C anyo so tatra u ° jagalo nâma a°. — 2[2]. C °shṭavyo | . — 2[3]. BC °toḥ c°. — 3. C °kshavo mâro pâpîmâm̃ tena kâ° B °garâ nai°. — 4. C °eta uda° BC °tvâ vishayâte(C °to) stha° C °lam abhikrânto | . — 5. C etarahim̃ pi a°.

7. C iti çrîmahâvastuavadâne vânarijâ°. — 8[1]. C atha khalu punar bhikshum âhatsuḥ | B °nsuḥ pa°. — 8[2]. C °gavan ka°. — 9[1]. C na bhikshavo etarahim̃m evâ °. — 10[1]. C bhikshu âhatsuḥ || . — 10[2]. BC °bhagavân || . — 10[4]. B ° kshavaḥ bhû ° C ° kshavo bhû°.

11. B °vârâṇaçi kâçi° BC °de añjanako° B °yati || kṛi° BC °hano tasya°. — 13. C °jyam̃ sphîtam̃ ca subhi° B °câkîrṇṇâjanamanushyam̃ ca | sukhi°. — 14. BC °ro sarvâkâlam̃° B °rṇṇavâdi ta°. — 15. B °tvâ ca a° C.° putro vayasyo | .

16. B °amâtyâpu° C °sarvâkâ° BC °sya ca va° C °dî viryya lo°. — 17. C °sarvâkâ° BC ° sya ca va° C °rṇṇavâdi çi °. — 18. C °sya va varṇṇa° BC °dî rûpavâm̃ lo°. — 19. C °sarvâkâ° BC °dî prajñâye lo°.

21[2]. B °nâsti puṇyo hi sa° BC °ttare hi ya°.

विपश्यिं दृष्ट्वा आगतं पूर्णमासी व चन्द्रमं ।
अजिनं प्रस्तरे मार्गे बोधिं प्रार्थेन्तो नुत्तरां ॥
शिखिनं लोकार्थचरं भिक्षुसंघपुरस्कृतं ।
तर्पेसि खाद्यभोज्येन बोधिं प्रार्थेन्तो नुत्तरां ॥
विश्वभुवं च महार्हेहि चीवरेहि सश्रावकं ।
आच्छादये संप्रहृष्टो बोधिं प्रार्थेन्तो अनुत्तरां ॥
त्रिहि च लोकनाथेहि ब्रह्मचर्यं चरे अहं ।
काश्यपो मां वियाकार्षी बोधिं प्राप्स्यसि अनुत्तरां ॥
आपंचहि कृती येव त्रीहि प्रार्थयामि निर्वृतिं ।
त्रीहि च वासितो लोके त्रिंशको च विवर्तितः ॥
एकनवतिस्मिं कल्पे यदा लोके निवर्तितो ।
अथ अन्ये बोधिसत्वो नव कल्पानि संसरे ॥
वीर्यकायेन सम्पन्नो प्रज्ञापृथुसमाहितो ।
नव कल्पानि स्थापेसि वीर्येण पुरुषोत्तमः ॥
वीर्यन्तु यत्नेति बोधिं अनन्यभाषितं बलं ।
न च वीर्यं न प्रशस्तं बोध्यंगबलमिन्द्रियं ॥
प्रहानदानद[मसंय]मेन समुदागच्छन्ति नरोत्तमा ।
विवर्तमाने लोकस्मिं भवन्ति पुन पुंगवा ॥
ते बोधिं कल्पशतेन समुदानेन्ति नरोत्तमा ।
अथ एकनवते कल्पे संबुद्धो शाक्यपुंगवो ॥

1. B vipaçyîm̃ dṛi° M vipaçvim̃ drishṭvâ âgam̃tam̃ ° sî va cam̃dramâ ‖ B °sî ca candramâm̃ | . — 2. M atitam̃ prasta° B °mârgam̃ bo° BM °prârthayatânu°. — 3. M çikhim̃ ca lo ° skṛitaḥ ‖ . — 4. M tarpeçi khâ° BM °prârthayatânu°. — 5. BM °ca marharshehi ci°.

6. BM °prârthayatâ(B °to a)nu°. — 7. M anuttarâm̃ loka ° hmacarya care°. — 8. BM °mâm̃ vyâkâ° B °prâpiçikhi anu° M °prâpsyati anu°. — 9. B °kṛitîye ca trehi trehi prârthayemi nirvṛitim̃ | M °cahi prâkṛitiye ca tâhim̃ prârthaya nirvṛitim̃ | . — 10. B trihi ca çito loke trim̃çako na viva° M °rttitâ ‖ B °rttitaḥ e°.

11. M °lpe yathâ loke vivarttitâḥ ‖ B °loke vivarttite | . — 12. M anye bodhimatvâ na° B °dhisatvâ na° M °lpâṇi sam̃saret | . — 13. B vîryam̃ kâ° M vîryyakâreṇa sam̃panno ° hitaḥ | . — 14. B °sthânesi° M °sthâpesu vîryena susamâhitaḥ ‖ nava kalpâni sthâpesi ° ttama ‖ . — 15. M vîryam̃ tu yatana bo° B °ntu yatneti bodhim̃ anyamabhâ° BM °shitam̃ daçabalo(B °bale |).

16. B na vîryam̃ na prasastam̃ ° M °bodhim̃gabalam im̃driyam̃ ‖ B °bala indriyâ pra° | . — 17. M prahâyadâ° BM °samudâ(M °dâya)gaccheti naro°. — 18. M vivartane lokesmin bhavam̃ti puṅgavâ B °nti pum̃garâto | bo°. — 19. M to bo° B bodhi kalpa° BM °dânehi naro°. — 20. B °buddhe çâ° M °buddha çâ° B °gave dâ°.

दानशीलं परिगृह्य बोधिसत्वा महायशा ।
दानं शीलं च प्रज्ञां च वर्णयन्ति महर्षिणां ॥
बुद्धान दानं सुगतेन देशितं
अनोमन्यायेन अनोमबुद्धिना ।
तादृशं सुगतमनुस्मरन्तो
निरामिषां को न लभेत प्रीतिं ॥

इदमवोचद्भगवां सदेवमनुष्यासुरलोको भगवतो भाषितमभ्यनन्दत् ॥

समाप्तं बहुबुद्धसूत्रं ॥

महान्तं धर्मसंभारं महाजनहितावहं ।
महावस्तुं महाख्यानं भदन्तसुगतेन हि ।
सर्वसत्वानां हिताय संबुद्धेन प्रकाशितं ॥
ये च देशेन्ति सद्धर्मं शृणोन्ति ये च देशितं ।
सर्वे ते अधिगच्छन्ति निर्वाणपदमच्युतं ॥
सर्वंददस्य पुर जातिरभूषि सिद्धा
आचारदानदमथैर्जगतीहितैषी ।
सविघ्नरूपचरितो तद्भूषि शक्रो
मा च्यावयिष्यति ममेष इतो स्वस्थानात ॥
सो निर्मिणित्व नरकं सर्वंददस्य तस्य
ये दानशूरगुणवां प्रपतन्ति अत्र ।

2. M °rṇṇayaṁti°. — 3. B buddhâ ca dâ° M buddhâya dâ° B °taṁ anomanâye° M °taṁ anopanopena anomabuddhitâṁ | . — 5. M taṁ tâdṛi° smaraṁto ni° B °nirâṁmishâṁ kâ na labhate prîtiṁ || M °labhateya prîtiṁ || .

7. M idaṁm a° gavân sade° bhyanaṁdeti || . — 8. M iti çrîmahâvastuavadâne ba° B °ddhakaṁ sû° M °traṁ samâptam || . — 9. M mahâṁtaṁ dha° B °haṁ ma°. — 10. M °bhadaṁte sugaṁtena hi || hitâya le | khitaṁ sarvaṁ hitâya sarvasatvânâṁ hi | tâya lekhitaṁ hitâya sarva°.

11. B sarvasarvasatvânâṁ | hitâya sarvasaṁbu° M sarvasatvânâṁ saṁbuddhena hitâya na pra°. — 12. B ye ca deçanti sa° M °ddharmmaṁ çriṇvaṁti ye ca deçitaṁ | . — 13. M °gacchaṁti ni° B °cchantu ni°. — 14. B siddhaṁ sarvaṁdada puriṁmajâtir abhûshi âryânedam etrataraṁ jagatî° M siddhaṁ sarvaṁ ca daṁdaṁ ca purijâti ca bhûshi ca || âcâryân edam eva taṁ tatraraṁ jagatîhite pi ca || B °teshi saṁ°.

16. M saṁvighna° B saṁvijñânarûpaca° shi | çakra mâ câvarayishya° M °çakraṁ mâ câvara | yeshyati maisha graṁ thânâm ito || . — 18. B so nimiṇi° BM °kaṁ adâdâsya tasya ye° M °çûro gaṇavâṁ prapataṁti || atha sau° B °prapattanti | atra so°.

संहृत्य वीर वत तं दुःखमेवरूपं
दानं निदानं सर्वसत्व सुखी भवन्तु ॥
शक्रो ब्रवीत्प्रशमदानदमेन वीर
किं प्रार्थयेत् भगवतीसुखतां परत्र ।
सो [343ᵃ] ह्यब्रवीत् भगवतीपुरे नास्ति काय
प्रागेव खो भगवतीपुरस्त्रर्थिकेषु ॥
यत्र न जानति जरां न च मृत्यु व्याधिं
न च . . . प्रियजनः प्रियविप्रयोगः ।
शान्तं निरालयं निरन्तरदुःखमोक्षं
प्रार्थयामि पदमच्युतं निर्वृतिं च ॥
सो ह्यब्रवीत्परमदुष्करमेतत्स्थानं
बोधीविबोधनकं कामरतिप्रहाणं ।
निवर्तय मतं स्वकं जनयाहि छन्दं
कामसुखे विषमभोगसुखे च रम्ये ॥
शक्रासनं यदि भवे मम नित्यकालं
सर्वैश्च कामरतिभिः न च विप्रयोगं ।
न त्वेव कामगुणसौख्यनिबद्ध बुद्धि
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
दिव्यानि मानुषसुखानि च यानि लोके
यं चेह जन्मनि सुखास्ति सुखं यमूर्ध्वं ।
ते कल्पकोटिनयुता सुखितो भवेयं

1. BM so(M sau)hṛicca vìryavaṁ ta (B °ryavanta) duḥkham evaṁrûpaṁ sarvaṁ dânaṁ ni° B °rvasatvaṁ su° M °bhavaṁtu B °ntu ça°. — 3. BM °vît ‖ praçadâmadamena vîra (M °meta vîro) kiṁ prârthayate bhagavatîṁ su° M °para? | . — 5. B sâ hya° M so hyebravît paramabhagavatîpura me sti° B °t bhagavatîpura me sti° BM °prâgreva sukhe bhagavati puri(M °tîshu ni)rarthakeshu | .

7. BM °jânati jarâ(M °ti narâ) na ca mṛityu vyâdhiṁ na ca priyajanaḥ(M °jato) priya-(M °yo)vi° M °yogo ‖ B °gaḥ çâ°. — 9. M çâṁtâ nilâraya niraṁtaraduḥ° B çânta nirâlaya niranta° BM °mi padacyutì nibhâ ca (M °bhâ va) | .

11. BM °bodhivibodhanaṁ kâmarati(B °tiṁ)pradhânâṁ | . — 13. B hantuṁ vivartta° M haṁtuṁ vibhartta ° sva janayâhi cchaṁdaṁ kâ° B °cchanda kâ° M °gasukhaṁ ca°. — 15. BM çakrâçanayavibhave(B °bhate) ma° M °nihitakâ° B °laṁ sa° M °tibhir na° B °yogaṁ na°.

17. B °khyaviba° M °khyavibuddha buddhiḥ ‖ sa° B °dhiṁ na vivartta°. — 19. M °shamukhâ ° ke ‖ yaṁ° B °jatmani° BM °khaṁ ûrddhaṁ(B °rddhaṁ |).

21. BM °koṭi(M °ti)nayutâ saṁ(M °sa)jñatâ praṇidhiṁ(B °dhi) na viva°.

सर्वज्ञताये प्रणिधिं न निवर्तयेयं ॥
दुःखानि यानि च इहास्ति च श्रूयते च
ये कल्पकोटिनयुतेषु बहुप्रकारं ।
ते दुःख कल्पनयुता दुःखितो भवेयं
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
यावन्तरेण परमार्थविदू भवेयं
तावन्तरं यदि अवीचिगतो वसेयं ।
वीर्यं च मे न प्रतिसंहरणाय शक्यं
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
. . . . . . . . . . . . . .
. . . . . . . . . . यच्च बाल ।
भुंजेय अयोगुडं पिबेय विलीनलोहं
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
पातालमध्ये निवसे वधकेहि सार्धं
खज्जे शरीरं च पुनः पुन संजनेय ।
तद्दुःखं तादृशकमुद्वहितुं समर्थो
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
शरशक्तिवर्षं यदि वर्षयि तीक्ष्णधारं
सर्वं शरीरं यदि छिज्जति तं अशेषं ।
तद्दुःखं तादृशकमुद्वहितुं समर्थः
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥

2. BM °çruyate ca kalpeshu nayu(M °nayatra)te°. — 4. BM °khitâ bha° B °jñatâ praṇidhiḥ na ni° M °jñatâ praṇidhi naṁ vivartta°.

6. BM vârajinaṁ pûrve cahaṁ (M °pûrvavahaṁ) parihareyaṁ hi varshakoṭiṁ yâvanta-(M °vaṁta)reṇa° B °vidu bha° M °vidur bhaveyaṁ || tâvaṁtaraṁ° B °raṁ yâva avî° M °cigate vaseyaṁ vî°. — 8. B °pratisâha °kyaṁ | sa° BM °dhiṁ na vivarttayeyaṁ | yacca bâla(bâra) bhuṁjaya a°.

12. BM °beya ca lohaṁ sarva° M °dhiṁ na vivartta°. — 14. B °madhyanivasema vadha° M °madhya tivaseya vadha ° khajja çarîraṁ punar va se janeyaṁ B °rîraṁ punaḥ na ca saṁjaneyaṁ tad duḥ°.

16. M ta duḥkha tâdṛçakaṁ udva° B tad duḥkha tâdṛçaṁkaṁ udva ° marthâ sarva° M °marthaṁ sarva ° dhiṁ na vivartta°. — 18. BM saṁ(M sa)raktaṁ çakti° B °rshayi tikshudhâraṁ sa° M °cchidyati açesha du° B °cchijjapi açeshaṁ du°. — 20. BM duḥkhaṁ (M °khaṁ ||) tâdṛçaṁ(M °çakaṁ) samu° B °martha sarva° M °marthaṁ sarva° B °ṇidhi na ni° M °ṇidhi na vivarttayeṁyaṁ ||.

यदि गंगवालुकसमेषु करित्व पूजां
बुद्धेषु पश्चहं लभेयमिममग्रबोधिं ।
तं तावद्दीर्घं भवं संसरितुं समर्थः
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
गर्भासये यदि भवे महकल्पकोटी
जातस्य जातिशतं खिज्जेय चंग मे सो ।
तद्दुःखं तादृशं शरीरगतं सहेयं
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
यानि च दुःखा नरके तथ तिर्यग्योन्यां
प्रेतमनुष्यकभवेषु बहुप्रकारं ।
तं दुःखं सर्वं निपते यदि मे शरीरं
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
यावन्ति प्राणनयुता विनयेयं लोके
तावन्ति कल्पनयुतां नरके वसेयं ।
तं दुःखं तावच्चिरमुद्वहितुं समर्थः
सर्वज्ञताय प्रणिधिं [343$^{b}$] न निवर्तयेयं ॥
नाहं पुनः इतो निवर्तयितुं समर्थः
एषो सो निश्चय कृतो जगतो हितार्थं ।
यावन्न प्राप्तममृतं परिपूर्णमासा
सर्वज्ञताय प्रणिधिं न निवर्तयेयं ॥
संनाह एष दृढ वज्रमयो संनद्धो
दाने दमे व्रततपे न मे अस्ति खेदो ।

1. BM °lukasamaṁyeshu ka ° paçya(M °çyaṁ)haṁ labheyaṁ imam agra° B °dhiṁ na°. — 3. B na tâvad dî° M na tâva dîrghaṁ° BM °bhava saṁ ° ṇidhiṁ(M °dhi) ti niva°. — 5. B °mahatkalpa° M °koṭiṁ jâtaç ca° BM °çata khi(B °ta cchi)jjaya aṁgamaṁ | .

7. B duḥkha tâ° M duḥkhaṁ ca tâ ° dhiṁ na viva°. — 9. M yâti ca ° ke tathâ tiryyagyonibhyâṁ pretema° B °ke tathâ tiryagyobhyâṁ pre° BM °nushyanti bha°.

11. M duḥkha sa ° te ca yadi ° tâyaṁ praṇidhiṁ na viva°. — 13. M yâvattaṁ prâ° B yâvataṁ prâṇanayutâ vineyayaṁ lo° M °nayutâṁ vineya loke tâvaṁti ka°. — 15. B °duḥkhâ tâvaciraṁ udva° M °duḥkha tâvacciram u ° ṇidhiḥ niva°.

17. M mâhaṁ punar itâ nivartta ° esha sa°. — 19. M yâvacca prâptam asya amṛi° B °ptam asya taṁ pa° M °jñajñâya praṇidhi na ni°.

21. M saṁtâha e° B °dṛiḍha ca jâmayo° M °jramaye sannaddho dâme dame vra ° pe na asti° B °pe na me 'sti°.

सत्वान मोचयितुं इं अपुनःभवाय
सर्वज्ञताये प्रणिधिं न निवर्तयेयं ॥
एवं निश्चितमती सुविनिश्चितार्था
बोधीनिबद्धहृदया विचरन्ति लोके ।
लंघितबङ्कगिरिव पारगता समुद्रं
प्राप्नोन्ति बोधिं सबलं नमुचिं निहत्वा ॥

अथ खलु राजा शुद्धोदनो यदा भगवां न्यग्रोधारामे पौरुषमात्रं वैहायसम- [illegible] विविधविचित्राणि यमकप्रातिहार्याणि करोति यदा राहुरसुरेन्द्रो वेमचित्री असुरेन्द्रो मुचिलिन्दो असुरेन्द्रो अन्ये च षष्टिरसुरनयुतानि अनुत्तरां सम्यक्संबोधिं व्याकरित्वा बहूनि च प्राणकोटिसहस्राणि आर्ये धर्मे प्रतिष्ठापयित्वा आत्मना च स्रोतापत्तिफलं साक्षात्कृत्वा दृष्टस ो अविपरीतपर्ययो शास्तुः शासने उत्थायासनातो येन भगवांस्तेनांजलिं प्रणामयित्वा भगवतो पुरतो इमं उदानं उदानयति ॥ लब्धा मे पुत्र सुलब्धा लाभा यस्य मे एदृशो पुत्रो द्विपदानामुत्तमः सर्वगुणैरुपेतः । अमोहन्ते पुत्र सफलं चक्रवर्तिराज्यमपहाय महान्तं च ज्ञातिवर्गं विजहित्वा अभिनिष्क्रमणं । अमोहं ते सफलं षड्वर्षाणि दुष्करं चीर्णं अहो अमोहं ते सफलत्वतेन बोधिः प्राप्ता । अमोहन्ते सफलं च धर्मो प्रकाशितं यस्य ते सदृशो नास्ति सदेवके लोके समारके [illegible]ब्राह्मणवणीपके प्रजायां सदेवमानुषासुरायां ॥ ममापि पुत्र अमोहं सफलं च जीवितं

1. M satvâna muṁcayitùṁ ahaṁ punarbhavâya sarvajñatâya praṇidhi na nivarttayepa. — 3. M °çcitam abhisuniçcitârtha bodhini° B °matiḥ su ° târthaṁ bodhiṁ niba ° vicarehi loke ‖ M °vicaraṁti loke ‖ . — 5. M °pârama asamudra prâpnoti bodhisabalaṁ° B °pnoti bodhisaṁvaraṁ namuṁci ni°.

7. M °vaihâyase aṁtariçve vividhavici° BM °roti | yadâ° M °râhulasureṁdro° BM °vemacitrî(B °tri) ca sure ° ndro anye(M °atye) ca shashṭi(M °shṭhi)r asuranayutâni anutta(M °nuta)râṁ° M °ksaṁbuddho vyâ° B °bahuni ca prâ° M °srâni âryya dharma pratishṭhâ° B °tmano ca çro° M °tkṛitâ drishṭasatyâ a° B °shṭasatvâ a° M °ritapratyayâ çâstuḥ çâsahe utpâyâvanâto ye ° vâṁ tenâṁ° BM °maṁ udâraṁ udânayati ‖ .

13. M lâbhâ me su ° sya mé idri ° dânam uttamo sarva ° peto. — 14. M amohaṁ te pu° BM °phalâ cakra° M °ya mahâṁtaṁ ca jñâ° B °ṇaṁ a°. — 15. B amohaṁ | te saphalâṁ sha° M °shaṭ varshâ ° raṁ tîrṇaṁ ° haṁ ta sa° BM °phalâkṛi° M °bodhi prâptâḥ a°.

16. M amoha te sapha ° dharma prakâ° BM °çitaṁ | yasya° B °te saṁdṛiço nâsti saṁdevake lo° M °çravaṇabrâhmaṇake brâhmaṇike prajâ° B °hmaṇavanîpa° M °shâyâṁ surâyâṁ ma°. — 18. B °pi yatra ° sya me me vishayo e° M °sya me vishayo sadṛiço pu ° sarve loke° B °sa loke° M °ṇâṁ agre.

यस्य मम विषये एदृशो पुत्रो उत्पन्नो असदृशो सर्वलोके देवमनुष्याणामग्रो ॥ साधु पुत्र सर्वलोके अर्थसमहितैषी अनुकंपको अनुकंपामुपादाय ममापि पुत्र अनुकम्पामुपादाय यावतकं कपिलवस्तुं वासं वसितुकामः तं दैवसिकं राजकुले भुंजेति ॥ अधिवासये खलु भगवां तूष्णीभावेन ॥

अथ खलु राजा शुद्धोदनो भगवतो तूष्णीभावेनाधिवासनां विदित्वा हृष्टो प्रीतो सौमनस्यजातो संवृत्तो भगवतः [344ᵃ] पादौ शिरसा वन्दित्वा त्रिष्कृत्वं प्रदक्षिणीकृत्वा येन भिक्षुसंघं तेनांजलिं प्रणामयित्वा प्रक्रामि ॥ अथ खलु राजा शुद्धोदनो तस्यैव रात्र्यात्ययेन प्रभूतं खादनीयं भोजनीयं प्रतिजागरित्वा कपिलवस्तुनगरं सिक्तसंमृष्टं कृत्वा अपगतरजं अपगतपाषाणशर्करकठल्लं मुक्तपुष्पावकीर्णं गन्धघाटिकाविधूपितं चित्रदुष्यपरिक्षिप्तं विततवितानं ओसक्तपट्टदामकलापं याव च कपिलवस्तुं याव च न्यग्रोधाराम अत्रान्तरे नटनर्तकल्लमल्लपाणिस्वरिका कुम्भतूणिका वेणुवंशस्वरद्विस्वलशोभिकवेलुकभाणकगायनकपंचवटुका देशे देशे स्थापिता यथा भगवतो महता राजानुभावेन महता राजर्द्धीयेन नगरप्रवेशो भवेया ॥

भगवां दानि अपरेज्जुकातो न चातिकाले न चातिविकाले मागधके प्रातराशे निवासयित्वा च प्रावरित्वा च भिक्षुसंघपुरस्कृतः भिक्षुसंघपरिवृतो दक्षिणेन शारिपुत्रो वामेन मौद्गल्यायनो नुपृष्ठतो आनन्दभिक्षु । द्वयोपराजिकं गच्छन्ति । हंसप्रडीनं बुद्धा भगवन्तो गच्छन्ति ॥ धर्मता खलु पुनर्बुद्धानां भगवतां नगरप्रवेशे

2. BM sâdhû(M sâdha) putra arthasamâhi° M °shi anukampâm upâdâya mamâ° M °yâvattakaṁ ka° BM °saṁ vaçitu° M °maḥ ta daivasi° B °devasikaṁ râ° BM °kulaṁ bhuṁ°. — 4. M °gavân tûshṇi°. — 5. M °ddhodato bhagavato tû ° prîtisau ° tto bhagavato pâdau çirasâ vaditvâ trishkritva prada° B °shkṛitaṁ prada° BM °ghaṁ tanâṁja(M °tenâṁjaṁ)liṁ praṇamayi° M °prakâmi ‖ .

7. M °ddhodana tasyai° BM °tijâgaritvâ kapilavavastunagaraṁ siktasaṁsṛishṭaṁ (B °shṭa) kṛitvâ apagata(M °gataṁ)rajaṁ° M °shâṇaçakaṁṭakathallaṁ muktakusumâvakîrṇaṁ° BM °gandhaghâ(M °gha)ṭikânidhûpitaṁ | citra(M °taṁ citta)dushyaparikshiptaṁ(B °pta) vitatavitânaṁ osaktapaṭadâma(M °oçaktaṁ dâmapatta)kalâpaṁ yâva ca (M °vacca) kaṁvapilavastuṁ yâva ca (M °stu yâvacca) nyagrodhârâma(M °râmaṁ adrâkshît ‖) atrântarâ naṭanartta(M °trâṁtare nathanaṭa)kari° M °pânisvarakâ kuṁbhabhûṇikâ ve° B °veṇuvaṁkâ dvi° BM °bhitakhe ° paṁcabahukâ deçe deçe sthâpitâ(M °tâ ‖) yathâ bhagavato(B °tâ) mahato râjâ° M °ṛiddhiyena nagaraṁ pra ° veyâṁ ‖ . — 14. M bhagavân dâniṁ aparajjukâto na câtikâlaṁ na câtivikâlaṁ mâgadhakâ prâtaraçe° BM °yitvâ ca prâva(B °praca)ritvâ ca bhikshusaṁghe puraskṛitaḥ(M °to) bhikshusaṁgha(B °ghaṁ)-parivṛi° M °çâlipu° B °putra vâme° BM °mauṅgalyâyanânupṛi° M °ânaṁdabhi° BM °kshu dva°.

16. BM dvayo(M °ye)pi râçikaṁ° M °cchaṁti. — 17[1]. BM haṁ prâlinaṁ(M °litaṁ) bu° M °bhagavaṁto gacchaṁti | . — 17[2]. M °buddhâtâṁ bhagavatâṁ nagarapradeça

यदा भगवान्नगरं प्रविशति अश्वा हेषन्ति हस्तिनः क्रौञ्चनादं मुंचन्ति मोरा नृत्यन्ति कोकिला तुणतुणायंति अघट्टितानि वाद्यानि वाद्यन्ति पेडागतान्याभरणानि रसन्ति । अन्धा चक्षुं तन्मुहूर्तं प्रतिलभन्ति । वधिरास्तंमुहूर्तं श्रोतं प्रतिलभन्ते । उन्मत्तकास्तंमुहूर्तं स्मृतिं प्रतिलभन्ते । विषपीतका निर्विषा भवन्ति । ये जना अश्राद्धा मन्द्प्रसादास्ते दानि प्रतिसंविदिता भवन्ति ॥

अथ भगवां नगरं प्रविशति ॥ समनन्तरं भगवता कपिलवस्तुनगरद्वारे पादतला उपक्षिप्ता तदियं महापृथिवी षड्विकारं कम्पे संप्रकम्पे संप्रचले संप्रवेधे पुरस्तिमं उन्नमति पश्चिमकं ओनमति पश्चिममुन्नमति पुरस्तिमं ओनमति दक्षिणं उन्नमति उत्तरा ओनमति उत्तरा उन्नमति दक्षिणा ओनमति ॥ भगवां दानि कपिलवस्तुं नगरं प्रविष्ट अनुपूर्वे[344b]ण पितुर्निवेशनमनुप्राप्तः ॥ तेहि दानि कपिलवास्तव्येहि शाक्येहि शाक्यां संनिपातेत्वा घोषणा कारापिता भवन्तो न केनचिद्राजस्याधिक्षिपितव्यं त्वं भगवतः पुत्रो ति यो आचिक्षिप्स्यति तस्य वधो दण्डो ॥

भगवां दानि नित्यकं राजकुले भुंजति ॥ अथ खलु महाप्रजापती गौतमी राजानं शुद्धोदनं विज्ञापयति ॥ महाराज यदि एव अनुकूलं भवेया ततः भगवां मम कुले भुंजेया ॥ राजा आह ॥ गौतमी एवं करोहि ॥ अथ खलु महाप्रजापती गौतमी येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा

yadâ° BM °raṁ viça(M °çaṁ)ti || açvâ hesanti ha° M °stino kroṁcaçabdaṁ nâdaṁti || mârâ nrityaṁti kokilâ bhuṇabhuṇâyaṁti | agha° B °daṁ mucanti | mârâ nṛi ° yaṁti | agha° M °dyâni vâdyaṁti pe° B °dyanti yetrâga ° ramanti || M °ramaṁti || .

3[1]. M aṁdhâ cakshuṁshi tatmuhû° B andha ca° M °labhaṁti | . — 3[2]. B °s taṁmûhû° M °labhaṁte u°. — 4[1]. B utmattakâs taṁtmûhû° M °labhaṁte | . — 4[2]. M vishayîta ° bhavaṁti. — 4[3]. M °ddhâ maṁdaprasâ ° bhavaṁti || .

6[1]. M atha khalu bhagavân nagaraṁ pravekshyaṁti B °pravekshyanti | . — 6[2]. M samanaṁtaraṁ bha ° stunagare dvâre yâvadaṁtarâ upakshiptâḥ tad i° B °dvâre yâdatalâ upakshiptâ | tad idaṁ mahâpṛi° BM °ḍvikâraṁ kampe(M °mpe prakaṁmpe) saṁpraka-(M °kaṁ)mpe saṁpracâraṁ saṁpravedheyi(M °vedhati ||) purastimaṁ(M °stimena) unnamati paçci(M °pacchi)mako onamati paçcimam u(M °maṁ u)nnamati(B °ti |) purastimaṁ onati dakshinam u(M °kshiṇaṁ u)nnamati(B °ti |) uttarâ onamati uttarâ (M °ti | uttaraṁ) unnamati dakshiṇâ (M °ti | dakshiṇo) onamati || . — 9. M bhagavân dâni ° vishṭho anupû°. — 10. B te dâ° M te dâniṁ kapila° BM °vye(B °vyehi) çâkyehi çâkyâ (M °kya) çâkyehi yehi saṁnipatitvâ° M °pitâ | bhavaṁto na ke ° syâvikshitavyaṁ | tva bha ° tro ti yo cikshipati ta ° dho daṁḍo || B °dho daṇḍa bha°.

13[1]. M °dâ nityakaṁ ° kulaṁ bhuṁ°. — 13[2]. BM °jâpati gau° M °vijñapayati || B °vijñepayati ma°. — 14. M °ja yadaivaṁ anukulo bhaveyâ tato bhagavân mama mû° B °veyâ | tataḥ°. — 15[3]. M °mitvâ bhagavata pâdau çirasâ vaṁditvâ yena bhagavâns tenâṁ ° gavaṁtam e°.

येन भगवांस्तेनांजलिं प्रणामयित्वा भगवन्तमेतद्वोचत् ॥ अधिवासयतु भगवां शुचेतनाये भक्तेन स्वके निवेशने ॥ अधिवासयति भगवां तूष्णीभावेन ॥ अथ खलु महाप्रजापती गौतमी भगवतः तूष्णींभावेनाधिवासनां विदित्वा प्रभूतं खादनीयभोजनीयं प्रतिजागरित्वा तस्येव रात्र्या अत्ययेन स्वकं निवेशनं सिक्तसंमृष्टं कारापितं ओसक्तपट्टदामकलापं मुक्तपुष्पावकीर्णं धूपितधूपनं । भगवतो महार्हं आसनं प्रज्ञपितं यथोपकं च भिक्षुसंघस्य ॥ अथ खलु भगवां काल्यमेव निवासयित्वा पात्रचीवरमादाय भिक्षुसंघपुरस्कृतो येन प्रजापतीये गौतमीये निवेशनं प्रविष्टो । निषीदि भगवान्प्रज्ञप्त एवासने यथासनं च भिक्षुसंघः ॥ अथ खलु महाप्रजापती गौतमी स्वहस्तमेव प्रभूतेन खादनीयभोजनीयेन बुद्धप्रमुखं भिक्षुसंघं संतर्पयि संप्रवारयि ॥ भगवां दानि यं कालं भुक्तधौतपाणिरपनीतपात्रो भिक्षुसंघो च ततो भगवां महाप्रजापतीगौतमीये अन्तःपुरिकानां च अनुपूर्वीयधर्मदेशनां प्रणामेति । यत्तद्बुद्धानां भगवतां अनुपूर्वीयधर्मदेशना । तद्यथा दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां ॥ प्रसीदि महाप्रजापती गौतमी प्रसन्नचित्ताय पुनः भगवां चत्वार्यार्यसत्यानि प्रकाशयति । दुःखं दुःखसमुद्[345ª]यं दुःखनिरोधं मार्गं ॥ महाप्रजापतीये दानि गौतमीये तत्रासने निषण्णाय विरजं विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं ॥

राहुलो दानि भगवतो छायाये स्पृष्टः । तस्य दानि सर्वरोमाणि हृष्टानि सर्वगात्राणि प्रक्लिन्नानि सर्वशरीरं च प्रीणितं । भगवतः छायाये निषीदित्वा

1. BM °çucetanâ ° çane a°. — 2[1]. B °yati || bha° M °gavân tûshṇî°. — 2[2]. M °bhagavato tûshṇîbhâ° B °dhivâsanam̃ vi° BM °ditvâ tasyaiva(M °vam̃) râtryâ prabhû° M °khâdaniyam̃ soja ° ktasam̃srishṭam̃° B °ktasanmrishṭam̃°. — 5. M °pitam̃ | yayopa° B °sya a°.

6. M °gavân kâlyam eva nisrayitvâ°, BM °jâpati gau° B °miya nive° M °vishṭo B °shṭo nishi°. — 8[1]. M nishidi || bha° B °di | bha ° thâsamam̃ ca bhi°. — 8[2]. M °jâpati gautamam̃ svahastam evam̃ prabhûtem̃na khâdanîyem̃na bho° B °khâdaniyam̃ bho° M °rppayi sam̃pracârayi | . — 10. M bhagavân dâni ° bhuktam̃dhautapâṇi apanitapâtram̃ bhi ° gho ca || tato bhagavân dâni yam̃ kâlam̃ bhuktadhautapâṇi apanitapâco bhikshusam̃gho ca || tato bhagavân mahâ° B °jâpatigautamiyam̃ antaḥ° M °miyam̃ am̃taḥpurikânâm̃ ca anupûrvâ ca dha° B °kânâm̃ cam anu° M °praṇameti | . .

12[1]. M °purvâya° BM °deçanâm̃ || . — 12[2]. BM °vipâkakathâm̃ pra°. — 13. B °sîdinsuḥ mahâ° M °sîditsuḥ || mahâgau ° nnacitâ ca pu ° gavân ca° B °tvâryasatyâ°. — 14. B °rgam̃ ma°. — 15. M prajâpatim̃ dânim̃ gau° B °pati dâni gautamî yat tatrâ ° ṇṇâya vilajam̃°.

17[1]. M râhulâm̃ dânim̃ bha ° cchâyâyâm̃ prishṭho ta° B °cchâyâyî sprishṭaḥ ta°. — 17[2]. B °dâni sarvalomâṇi hri ° gâtrâni praklim̃nnâni sa° BM °riram̃ ca praṇitam̃ ca bha°. — 18. M bhagavato cchâyâyâm̃ nishidi° B °cchâyâyî nishi° M °bhagavata animi° B °m anirmisham̃°.

भगवन्तमनिमिषं निध्यायति ॥ राहुलो दानि मातरं पृच्छति ॥ अम्बे कहिं पिता गतो ॥ यशोधरा आह ॥ पुत्र दक्षिणापथं गतः ॥ राहुल आह ॥ अम्बे केनार्थेन दक्षिणापथं गतः ॥ यशोधरा आह ॥ वाणिज्येन गतो ॥ राहुल आह ॥ किस्य दानि सो मम तातो न किंचित्प्राभृतं प्रेषयति ॥ यशोधरा आह ॥ पुत्र वणियेहि मार्गो विरुद्धः । तद्यदि आगच्छति तदा स्वयं आनयिष्यति ॥ राहुलो आह ॥ अम्बे किं एष श्रमणको मह्यं ज्ञातिको भवति । न कहिंचित् मम एदृशो मनो निपतति यथायं श्रमणो । मन्यामहं इदानीं मे सर्वहृदयं हरति । तं नाहेतुकं मम इमस्य श्रमणस्य सह दर्शनेन ईदृशं प्रेमं अतिरिव (उत्पादितं) यथा नान्येषां शाक्यानां । तन्मन्यामहं पिता व सो मम ॥ सा दानि यशोधरा आह ॥ पुत्र न एषो तव पिता ॥ राहुलो दानि मातृकण्ठिकाय याचति ॥ अम्बे अत्यर्थं मे आचिक्षाहि को मम एष श्रमणको भवति ॥ तस्या यशोधराये प्रेमस्नेहेन हृदयं परिपीडितं । पश्यति किं से करिष्यामि । यदि ताव आचिक्षिष्यं वधो दण्डो । अथ दानि नाचिक्षिष्यं स्वको मे पुत्रो परिवंचितो भविष्यति । जाने किं भवतु आचिक्षिष्यं अहं ॥ कामं खलु मे शाक्या तीक्ष्णेन शस्त्रेण अंगमंगानि छिन्देन्सुः संप्रदालेन्सुः न त्वेव राहुलशिरिस्य स्वकस्य पुत्रस्य नाचिक्षिष्यं ॥ कामं खलु मे शाक्या कायं तीक्ष्णेन शस्त्रेण वध्रपट्टिकायं पाटयेन्सुः न त्वेवाहं राहुलशिरिस्य स्वकस्य पुत्रस्य नाचिक्षिष्यं ॥ कामं खलु मे शाक्या कायं तीक्ष्णेन शस्त्रेण कहापणमासिकं पि छिन्देन्सुः न त्वेवाहं

1[1]. M °dânim̃ mâ° B °mâtalam̃ pri°. — 1[2]. M °gato ‖ pu°. — 3[2]. M °gataḥ ‖ . — 3[3]. M râhulo âha ‖ . — 4[1]. M kasyedâni ° tâtena kim̃° BM °cit çaucakam̃ pre°. — 4[2]. B °yehi mâgo vi° M °mârge vi°. — 5[2]. B °di âgaccheti tadâ° M °gacchati ‖ tadâ svayam̃ ârayishyati ‖ .

6[2]. B °kim̃ deca çra° M °kim̃ deva çravaṇa ° bhagati | B °vati na°. — 6[3]. M °t mama sadṛi ° çravaṇa B °çramaṇa ma°. — 7. M °nyâmahe | idânîm̃ me° B °ham̃ | i ° rati tam̃°. — 8. M tan nâhetuka esho mama i° B °hetuka esha mama i° M °çravaṇasya ° nena idṛi° BM °riva yathâ ° nâm̃ ta°. — 9. M ta manyomaham̃° BM °pi te yâme mama ‖ . — 10[1]. M °dânî ya°. — 10[3]. M °lo çani mâ°.

11. M anye atya °hi ko mamaiya çravaṇeko bha°. — 12[2]. BM °mi ya°. — 13[1]. M °tâvad âciksham̃ vadho° B °ciksham̃ vadho°. — 13[2]. M athedânim̃ nâ ° svakam̃ me pu°. — 14[1]. M °âvikshi° BM °ham̃ kâ°. — 14[2]. M °gâni cchim̃detsuḥ sam̃° B °ndetsuḥ sam̃° BM °letsuḥ na tveca(M °tvaiva) râ° M °çirasya sva ° nâvikshishyam̃.

16. M °çakyâ tîkshṇe° B °kshṇena vaddhapaṭikâ° M °vaddhapatikâyam̃ pâṭayetsuḥ na tve° B °nsuḥ | na tve° M °lasya çirisya svakasvakasya putrasya nâvikshi°. — 17. M kâmam̃ | khalu me çâkyâ khalu me çâkyâ kâyam̃° BM °kshṇena ça° M °ṇa kahâyena râçikam̃ vicchim̃detsuḥ | na caivâ° B °cchim̃detsuḥ | na caivâ M °çirîsya sva ° nâvikshi°.

राहुलशिरिस्य स्वकस्य पुत्रस्य नाचिखिष्यं ॥ कामं खलु मे शाक्या: काये अपि बि[345b]लशतानि पाटेन्तु: न त्वेवाहं राहुलशिरिकस्य स्वकस्य पुत्रस्य नाचिखिष्यं ॥

अथ दृष्ट्वा आगतं तं गणवरपरिवारितं पुरुषसिंहं ।
मीलितविगत: अभिमनो निध्यायति राहुलो सुगतं ॥
वारणचकोरनयनां अंजनपूरेहि मुदितनयनेहि ।
मातरमवलोकयन्तो निध्यायति राहुलो सुगतं ॥
तं दृष्ट्वा उपनिषन्नं गणवरपरिवारितं पुरुषसिंहं ।
वत्सो इव क्षीरपको उपागमे येन संबुद्धो ॥
सो च मुदितो नरोत्तमो निषण्णो . . . . सुगतच्छायायां ।
आमन्त्रयति जननीं सुखं श्रमणस्येयं छाया ॥
बहुका शाक्यकुमारा दृष्टा मया गता दशसु दिशासु ।
आभरणभारभरिता नो मह्यं मनं प्रसीदेति ॥
यथेमं काषायधरं दृष्ट्वा तूर्णं प्रीणयति मे गात्रं ।
भाषन्तं मधुरवचनं श्रुत्वान प्रीणितं मे गात्रं ॥
जालमृदुहस्तपादो समन्तप्रासादिको प्रदर्शनियो ।
प्रेक्षन्तो पि नंदाम्यहमसेचनकदर्शनो खु अयं ॥
तुष्टो भवामि दृष्ट्वागच्छन्तं दूरतो कनकवर्णं ।
प्रतिगच्छन्ते तु अहं दु:खितो भवामि अभावेन ॥
पश्यन्तो नाहेतुकं मह्यं यमसंस्तवं कनकवर्णं ।

1. BM °kyâḥ kâyaṁ a(M °yaṁ khalum a)pi bila(B °lla)çatâni kâyetsuḥ ‖ na caivâhaṁ râhulaçilikha(M °çiri)sya sva°. — 4. B gâthâ dṛi° M °gâthâṁ dṛi° BM °âgataṁ gaṇa° M °siṁhaṁ vivâritaṁ purushasiṁhaṁ | . — 5. M *omet les lignes 9-11*. B vilitavi ° dhyâyeti râ°.

6. B °koranayanaṁ aṁjanapurehi mattanapurehi mâ°. — 8. B °gaṇapari ° haṁ vatso°. — 9. BM °kshîravako ° ddho so°. — 10. BM °sharṇṇo sugatacchâyaṁ(B °yaṁ ‖).

11. M âṁaṁtrayati janani sukhaṁ çravaṇa° BM °cchâyâ ba°. — 12. BM °huke(M °keçâṁ) çâkya ° dṛishṭvâ ma ° daçadiçâsu ‖ . — 13. BM °ritâ na mahyaṁ°. — 14. BM yathâyaṁ kâ ° rṇṇaṁ praṇeti me gâtraṁ bhâ°. — 15. M bhâshaṁtaṁ ‖ madhu° B °dhuraṁ va° BM °naṁ mu(M °su)khena praṇîtaṁ me°.

16. M °stapâdâ samaṁtaprâ° BM °rçaniyo pre°. — 17. B prekshyanto pi nandasyâpi ase° M prekshaṁto dî naṁdasyâpi ase° BM °canako darçano khu ayaṁ(M °asaṁ) tu°. — 18. BM °mi | dṛishṭvâ âgacchan(M °cchaṁ)taṁ dû ° rṇṇaṁ pra°. — 19. B °gacchanto haṁ duḥ° M °gacchaṁto haṁ duḥ° BM °mi | abhâya pa°. — 20. M paçyaṁto nâhe° B paçyantaṁ nâ ° hyaṁ yaṁ asaṁ° M °hyaṁ yaṁ asatavaṁ° BM °rṇṇaṁ sa°.

सहद्दर्शनाद्‌ . . . . अतिरिव मनं प्रसादयति ॥
मन्यामहं पिता मम भ्राता ततः तहिं तहिं जातीषु ।
आसीन्मम श्रमणको तथा ह्ययं प्रीणयति गात्रं ॥
आचिक्ष मह्यं जननि यदि ते दृष्टं श्रुतं पि वा पूर्वं ।
कस्यार्थाये मम सो अतिरिव चित्तं प्रसादेति ॥
तस्य वचनं श्रुणित्वा स्वकस्य पुत्रस्य भाषमाणस्य ।
उष्णमिव निश्वसन्तो राहुलमाता अतो अब्रवीत् ॥
परिदह्यते मे हृदयं परिपृच्छति वाचाय मधुराय सो ।
न शक्यं राहुलशिरिस्य स्वकस्य पुत्रस्य नाख्यातुं ॥
कामं खु मह्यं कायं छिन्देन्सुः सुनिशितेन शस्त्रेण ।
न शक्यं राहुलशिरिस्य स्वकस्य पुत्रस्य नाख्यातुं ॥
कामं खु मह्यं कायं शाक्या वद्धपट्टिकायं पाटेन्सुः ।
न शक्यं राहुलशिरिस्य स्वकस्य पुत्रस्य नाख्यातुं ॥
कामं खु मह्यं कायं कहापणमासिकं पि छिन्देन्सुः ।
न शक्यं राहुलशिरिस्य स्वकस्य पुत्रस्य नाख्यातुं ॥
कामं खु मह्यं काये शाक्या अपि बिलशतानि पाटेन्सुः ।
न शक्यं राहुलशिरिस्य स्वकस्य पुत्रस्य नाख्यातुं ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
कर्णिकारं व संकुसुमि[346a]तं सुवर्णवर्णं प्रसादनियं ॥

1. BM °rçanâd a(M °d i)ti° prasâdaya°. — 2. M manyâsahaṁ °jâtiyu B °tîshu â°. — 3. BM âsi me çra° M °maṇo gautamo tathâ° BM °hyahaṁ prî°. — 4. BM âcikshya-(B °kshyaṁ) mahyaṁ(M °hyaṁ pi) jananî ya° B °taṁ pi câpûrvaṁ ka°. — 5. BM °ye mama atiriva(M °riya) cittaṁ prasîdanti(M °dayati) | .

6. M °svakasvakasya pu° bhâshyamâ° BM °ṇasya u°. — 7. B °çvasatî râ° M °çvasano râ° BM °mâtâ etad abhûshi(M °shi |) pari°. — 8. BM °pṛicchantaṁ(M °cchaṁtaṁ) vâcâya vâ madhurâya so (M °ya ço) çâ°. — 9. BM çâkyaka(B °kaṁ)nyâ râhuleçiri(M °rî)sya sva(M °svakaya)kasya pu°. — 10. M kâmeshu mahyaṁ kâyo kâryyopanamâṁ si kâyaṁ cchiṁdetsuḥ sunimitena çakreṇa B °hyaṁ kâryo kâyâ cchindetsuḥ su°.

11. M °çirîsya sva°. — 12. B kâmâ khu me yaṁ kâyo va° M kâmeshu ayaṁ kâyo va° BM °ddhapatikâyaṁ kâṭetsuḥ na°. — 13. BM na caiva(M °vaṁ) râ° M °çirasya sva°. — 14. B *omet les lignes 13, 14.* M kâmeshu mahyaṁ kâyo kâryâpaṇamâṁsi kâyo cchiṁdetsu ‖ . — 15. M na caivaṁ râ°.

16. BM kâmeshu mayaṁ kâyo api billaçatâni kâyetsuḥ(M °tsu) | . — 17. BM na caiva (M °vaṁ) râ°. — 18. M °pitâ yaç caishâṁ prabhâ niççara | esho te putra pitâ yaṁ paçyati dû° B °rṇṇaṁ ka°. — 19. M *omet la ligne 19 et les lignes 1, 2 de la page suivante* B °raṁ ca saṁku° suvarṇṇavarṇṇa | prasâdanîyaṁ ya°.

यस्यैषा शंखधवला भ्रमुकान्तर ऊर्णा दक्षिणावर्ता ।
एषो ते पुत्र पिता यस्यैषा प्रभा च निश्चरति ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
कालानुसारिसदृशं प्रवायंतं शीलगंधेन ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
हिमवां व शैलराजा प्रतिष्ठितं ध्यान चत्वारि ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
नाग इव हैमवन्तो अभ्युन्नत आर्यसंघस्य ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
सिंह इव दाठी बली विलोकयन्तं दशदिशासु ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
ऋषभो इव गोगणस्य परिवारितमार्यसंघेन ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
चन्द्रो व पूर्णमासी प्रभाय लोकं विरोचयति ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
सूर्यो व उदयन्तो अन्धान जनेति ओभासं ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
शक्रो व देवराजा पुरस्कृतो देवतागणेहि ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
ब्रह्मा व ब्रह्मलोके उदीरयति अद्भुतं घोषं ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।

1. B yasyesha çaṁ ° lâtramukhâ ° rṇṇâ ca dakshiṇâvartto | . — 2. B °syaisha prabhâ niçca°. — 3. BM °çyati dû ° rṇṇaṁ kâ°. — 4. BM kârânu ° vâyati(M °ti |) çi°. — 5. BM eshâ te° B °rṇṇaṁ hi°.

6. M hinavâṁ ca çai° B °vâṁ ca çai° B °pratishṭitaṁ° BM °tvâri e°. — 7. M °çyati dû° B °varṇṇa nâ°. — 8. B °iva himavanto° M °iva himavaṁto abhyaṁgete âryyasaṁ°. — 10. BM °iva dâṭi bali(M °laṁ) viloketi daça°.

11. B °putre pi°. — 12. BM °bho ca go ° vâritu â°. — 13. M eshâ te ° çyati dûratâṁ ka° BM °rṇṇaṁ ca°. — 14. M caṁdro° BM °rṇṇamâsi pra° M °loke virocasi | . — 15. BM °rṇṇaṁ sû(M °su)°.

16. M suryyo ca u° BM °dayato aṁdhâna ja(B °jâ)nati°. — 17. BM °rṇṇaṁ ça°. — 18. BM çakro devarâ° M °to devagaṇehi. — 19. B °varṇṇa | . — 20. B °hmâ ca brahma° M °lokaṁ dradîra ° dbhutagho°.

21. BM °rṇṇaṁ sâ°.

सालवनं व संकुसुमितं द्वात्रिंशलक्षणरुचिरांगः ॥
एषो ते पुत्र पिता यो नगरवरं त्वां चापि ममं च ।
अवहाय निष्क्रान्तो अनपेक्षी ज्ञातिसंघस्य ॥
एषो ते पुत्र पिता यं पश्यसि दूरतो कनकवर्णं ।
शयने सुखप्रसुप्तां कण्ठकमभिरुह्य निर्यातो ॥
एतस्य देवता हि द्वारं विवरेन्सु लोकनायकस्य ।
शब्दं चान्तरहाये मा कोचि जनो शृणे शब्दं ॥
सो तत्र मल्लविषये आमन्त्रेसि च्छन्दकमासीनो ।
चूडा सा परिगृहीता आहर शुद्धोदनसकाशं ॥
आभरणा कण्ठकं च . . . उपनामय पृथिवीपाले ।
अभिवादनं च ब्रूहि मातुश्च ममं नरपतिं च ॥
अनिवर्तितं गमिष्यं कृतस्वकार्थश्च आगमिष्यामि ।
ओहितभारविशल्यो पुण्यक्षेत्रो भवे लोके ॥
ओहितभारविशल्यो कृतस्वकार्थो जितक्लेशो ज्ञाति ।
गणं अनुकम्पमानो इह आगतो व कपिलवस्तुं ॥

राहुलो दानि मातुः सकाशातो श्रुत्वा एषो मे पिता ति ततः भगवतो चीवरकोणके श्लिष्ट आह ॥ अम्बे यदि एष मम पिता भवति [346b] अहमप्यनागारियं प्रव्रजिष्ये पैतृकं मार्गं अन्वेष्यं ॥ समनन्तरं राहुलो भगवतः चीवरकोणके संश्लिष्टः । ताहि दानि अन्तःपुरिकाहि रावो कृतो ॥ राजा दानि शुद्धोदनो

1. BM °naṁ saṁku° B °çadbhir aksha° M °çadbhi la ° cirâgaḥ ||. — 2. BM °varaṁ(M °ra) tvaṁ ca mama ca ava°. — 3. M °hâyaṁti niḥkrâṁto anape°. — 4. BM °rṇṇaṁ ça°. — 5. M çayana su ° ptaṁ kaṁṭha° B °niryâta |.

6. B °retsu lo° M °retsuḥ | lo° BM °sya ca°. — 7. M °câṁtarahâya mâ kvacijjâne çrune çabdo B °cântarayimâ kocijjâne çruṇe çabde so°. — 8. B °tra mallaṁ vishayaṁ âmantresi | cchandakam asina bu° M °vishayaṁ âmaṁtrayeti || cchaṁdakam asina bu°. — 9. BM buddhi parigṛihnâbharaṇâni upanâmaye çu ° çaṁ â°. — 10. BM âbharaṇa kaṇṭhakaṁ ca upa ° pâle(M °lo) a°.

11. B °naṁ ca kruhi° BM °çca mama narapatiṁ(B °tiṁ ca) a°. — 12. M °taṁ mamishyaṁ kṛitaṁ svakârthaṁ ca â° B °shyaṁ | kṛi° BM °shyâmi o°. — 13. M °bhâro vi° BM °çalyaṁ pu° M °kshetre bha° B °keçâ o°. — 14. BM °bhâro kṛita ° jñâtiga°. — 15. BM gaṇa anukampya(M °anuṁkaṁpa)mâno ihâgato kapi°.

16. M °ti tato bha ° çlishṭha âha ||. — 17. M °esho mama pi° B °ti || âgârisyâ ° shye | pai° BM °shyaṁ sa°. — 18. M samanenaraṁ râ ° gavato ci ° çlishṭi tâ° B °shṭaḥ tâ°. — 19[1]. M °dânî aṁtaḥpurikohi râ°.

तं एवं श्रुत्वा भीतो पृच्छति ॥ कस्यैष पापको शब्दः महतो जनकायस्य निर्घोषो यादृशो सर्वार्थसिद्धे अभिनिष्क्रान्ते ॥ ततः अपरेहि आख्यातं ॥ देव राहुल-कुमारो भगवतः चीवरकोणके संश्लिष्टो अहमपि प्रव्रजिष्यामीति ॥ राजा दानि शुद्धोदनो उत्कण्ठितो उत्कण्ठं उत्सृजति राजवंशो ॥ राजा दानि शुद्धोदनो प्रचण्डो यदा राजा प्रचण्डो तदा सर्वं शाक्यमण्डलं प्रचण्डं । एवं दानि अभ्यन्तरतो बाह्यतो च एकोरोदनं वर्तति ॥ राजा शुद्धोदनो रोदित्वा अश्रूणि परिमार्जयन्तो येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ वन्दित्वा एकांसमुत्तरासंगं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठापयित्वा येन भगवांस्तेनांजलिं प्रणामयित्वा भगवन्तमेतदवोचत् ॥ पर्याप्तं यं भगवां चक्रवर्तिराज्यमपहाय महान्तं च . . . . एको अभिनिष्क्रान्तो तत्साधु भगवं राहुलकुमारं अनुजानाहि यं न प्रव्रजिष्यति मा अयं राजवंशो उच्छिज्जिष्यति ॥ भगवानाह ॥ चरमभविको महाराज एषो सत्त्वो कृताधिकारो वासितवासनो अन्येहि बुद्धेहि अभव्यो एषो गृहकलत्रमध्यावसितुं । एतेहि एव स्कंधेहि परिनिर्वापयितव्यं ॥ राजापि शुद्धोदनो श्राद्धप्रसन्नो श्रद्दधाति भगवतो वचनं आह च ॥ यतो भगवानभिनिष्क्रान्तो ततो एकेहि अस्माभि न शक्यितं किंचिद्राहुलस्य अधिकारं कर्तुं न जातकर्मापि न जटाकरणकर्मापि न कुण्डलवर्धनं । यदा भगवं राहुलेन अत्यवश्यं प्रव्रजितव्यं तत्साधु भगवां आगमेतु सप्त दिवसानि सप्तमे दिवसे अभिनिष्क्रमणं करिष्यति तमेव से भविष्यति जातिकर्म तमेव चूडाकरणं तमेव कुण्डलवर्धनं तमेव अभिनि-

1. M °çabdo maha° B °driçe sarvârthasiddho upanishkrânto | M °ddha upanihkrâm̃to. — 2[1]. M °aparihi° BM °tam̃ de°. — 2[2]. M °bhagavato cî ° shyâmi iti || . — 3. M °dânîm̃ çuddhodano ro° (*l.* 6) B °to utkam̃tham utsṛijyate râjavam̃çaḥ | . — 5. B °rodanadam̃ va°.

6. BM °açruṇi° M °rjayam̃te ye° M °dau çirasâ vam̃ditvâ ekâm̃çam utta° B °ekâsam̃ uttarâm̃saṅgam̃ kṛi° M °jânumam̃ḍalam̃ ° shṭhâpya ye ° gavam̃tam e°. — 9. M paryyâpta yam̃ bhagavâm̃ cakravarttirâjyem avahâya mahâm̃tam̃ ca e° B °ntam̃ ca e° M °nishkrâm̃to tat sâdhur bhagavân râhu° B °dhu bhagavâm̃ râhu ° hi yo na pra° M °hi yena pravrajishyâmi mâ a ° javaço utsikshishyam̃ti || B °ço utmiddhishyanti || .

11[2]. B varamabha° M °grihakatra° B °dhyâvaçitum̃ | . — 13[1]. M etehi evam̃ skam̃dhuhi pa° B °dhehi etehi parivârayitavyam̃ | . — 13[2]. B râjâni çu° M râjâ dâni çuddhodano sârddham̃ prasanno çraddadhâsi bha° BM °nam̃ || âha ca yato°. — 14. M °bhinikrâto tataḥ ekohi asmâbhiḥ na çlâkshi° B °nto | tato ekehi astâbhiḥ ° jâtakamâni na jaṭâkaraṇakâmâpi kuṇḍala° M °jâtakarmâni na jaṭâkaraṇako nâpi kuṇḍa°.

16. BM yadâ bhagavâm̃ râ° M °hulem̃na atya° B °tyaye(ye *effacé après coup*)vakâça pra° BM °vyam̃ | tat sâ° B °dhur bhagavâm̃ â° M °dhu bhagavân âgametu ° se abhiniçrumaṇam̃ kari° B °shkramanam̃ kari° BM °rishyâmi tam̃ evam̃ me bha° M °rma tam evam̃ cû ° nam̃ tam evam̃ ku° BM °nam̃ tam evam abhi°.

क्रमणं ॥ अथ खलु भगवां राहुलमामन्त्रयति ॥ निवर्ताहि राहुल यथा ते आर्यको [347a] आणपेति तथा करोहि ॥ राहुलः दानि भगवतो चीवरकोणका ओसृष्टो ॥

यशोधराये दानि राहुलं हस्ते गृहीत्वा अन्तःपुरं प्रवेशितो उत्संगेन गृहीत्वा निषण्णा आह ॥ पुत्र राहुल मा प्रव्रजाहि दुरभिसंभुणं नाम दानि पुत्र मन्यसि । एदृशानि काशिकसूक्ष्माणि वस्त्राणि धारेतव्यानि यथा इह राजकुले एदृशाहि महार्हाहि शय्याहि शयितव्यं यथेह राजकुले एदृशानि मृष्टानि भोजनानि भोक्तव्यानि यथेह राजकुले । अपि तु पुत्र राहुल प्रव्राजिकेन भूम्यां तृणसंस्तरिके शयितव्यं वृक्षमूले शैय्यासनं चण्डालपुक्कसकुलानि पिण्डाय गन्तव्यं क्रुद्धप्रसन्नानां मुखं निरीक्षितव्यं अपि श्वसमानं पि उच्छिष्टं भोजनं भोक्तव्यं । अपि कुम्भवासीये श्मशाना उज्झितचोडका साहर्तव्या अरण्यायतनेहि विहर्तव्यं । तत्र भैरवाणि शब्दानि श्रूयन्ति सय्यथीदं सिंहशब्दा पि व्याघ्रशब्दा पि भेरुण्डकशब्दा पि । त्वं च पुत्र राहुल सुकुमारो सुखोचितो राजकुले संवृद्धो त्वं च पुत्र संमर्जितको वीणावंशपणवमधुरां शब्दां श्रुणमाणो कथं ते रतिर्भविष्यति तं कुहं नाम संभुणिष्यसि ॥ तत्र साधु पुत्र राहुल इह अन्तःपुरे पंचहि कामगुणेहि क्रीडाहि प्रविचारयाहि किं चानेन प्राव्राज्येन ॥ राहुल आह ॥ अम्बे न सो मम पिता महाराजकुले संवृद्धो ॥ यशोधरा आह ॥ एवमिदं ॥ राहुल आह ॥ अम्बे यो कोचित्सम्यग्वदमानो वदे सो सुकुमारो परमसुकुमारो ति तत्सो यो मे पिता

1[1]. M °gavân râhulam âmaṁtraya° BM °ti ni°. — 1[2]. M °hulo ya°. — 2. M râhulo dàniṁ bha° B °ṇako o° M °ṇake osṛishṭho. — 4. M °dâniṁ râ° B °hula ha° M °nishaṇo âha ‖ B °nisharṇṇo âha ‖. — 5. B putro râhu° BM °bhisaṁtuna nâmâ dâni ° si e°.

6. M edṛiçoni kâçi° B °kshmâni vastrâ° BM °dhâretavyâni | yathâ ° shâṇi çayyâhi (M °yyâni) çayitavyaṁ yatheha râjakule(B °le | api tu) edṛiçâni sṛishṭâ(M °shṭhâ)ni bhoja ° vyâni | ya ° le a°. — 8. M °pravrajiteta bhûmyâṁs tṛiṇa ° kshamule ça °ṇḍakasaku° ya gaṁta ° nâṁ sukhaṁ nirîkshitavyaṁ ‖ aviçvâsamânâni utishṭhaṁ bhoja° B °api svâsamânâpi ushṭishṭaṁ°. — 10. M api kuṁbhavâsiyo çma° B °mbhavâsiyo çma° M °çânâṁ jhitacokâ sâhatavyâ ‖. a ° vibharttavyaṁ ta°.

11. BM °bhairavâni çabdâni çruyyanti(M °yaṁti) ‖ sayya° M °siṁhaçabdo pi vyâghraçabdo pi bheruṇḍakaçabdo pi tvaṁ° B °ṇḍakaçabdâ pi tvaṁ°. — 13. M °kumâraḥ sukhopito° B °khopito° M °vṛitto tvaṁ ca putra samarjji° B °tra samajjitako° M °çruyamâṇo kathaṁ te rati bhavi° BM °kuha nâma° B °bhuṇishyati ‖ M °bhushyati ‖. — 15. M °iha aṁtaḥpu° B °purehi paṁ ° krîḍama pravicârayati kiṁ cânena pravrajena ‖ M °krîḍama paricâraya kiṁ cânena pravraje |.

16[3]. B ambe tat so mama pi° M ambe tat samarpito mahâ ° vṛitto ‖. — 17[4]. B ambe ye kecit sa samyagyada° M ambe ye keci samyakvadamâno cede so kumâro paramasukumâreti ‖ tat so yo çapitâ° B °bhûmyâ tṛi° M °myâṁstṛiṇa° B °starikena çayati vṛi° M °ke-

न सो भूम्यां तृणसंस्तारिके शयति वृक्षमूले शय्यासनं कल्पयति कुलाकुलेषु पिण्डाय चरति उच्छिष्टानि भोजनानि भुंजति अरण्यायतने विहरति न सो पि नाम एवं सुकुमारो एवं सुखोचितो तेनापि अभिसंभुणितं तद्वयं नाभिभुणिष्यामः ॥ अपि च अम्बे कामानवहाय अगारस्यानगारियं प्रव्रजिष्यं अत्यवश्यं निर्वाणं प्रापयिष्यामो । अपि च अम्बे यत्रच कोचि धृतिमां स्मृतिमां मम एवं तत्र गणयाहि अहमेव प्रव्रजिष्यं अन्वेष्यं पैतृकं मार्गं ॥ यशोधरा आह ॥ पुत्रावश्यं प्रव्रजिष्यसि ॥ राहुल आह ॥ बाढं अत्यवश्यं ॥ यशोध[347b]रा आह ॥ नास्ति मोक्षो ॥ राहुल आह ॥ नास्ति ॥ यशोधरा आह ॥ परित्यजसि मम च आर्यकं च ज्ञातिवर्गं च ॥ राहुलो आह ॥ बाढं परित्यजिष्ये ॥ यशोधरा आह ॥ शृणु पुत्र यदि तावदत्यवश्यं अगारस्यानगारियं प्रव्रजसि ततो षडिन्द्रियेहि सुसंवृतगुप्तद्वारेण विहरितव्यं भोजने च ते मात्रज्ञताये भवितव्यं । पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन भवितव्यं । आरब्धवीर्येण ते भवितव्यं । स्थानचंक्रमनिषद्यायोगमनुयुक्तेन ते विहरितव्यं । अपि मान्सशोणितं ते पुत्र परित्यजितव्यं । न चैव बुद्धप्रज्ञप्तिशिक्षापदं अतिक्रमितव्यं । प्रज्ञप्तं च ते पुत्र भगवतो शिक्षापदं परिपूर्णं धारयितव्यं । अपि जीवितहेतोरपि ते पुत्र अखेतव्यं । अप्राप्तस्य निर्वाणस्य प्राप्तये सुसंवृतेन च ते पुत्र भवितव्यं ॥ तत्कस्य हेतोः ॥ आगच्छन्ति हि पुत्र स्त्रीमहल्लिका प्रासादिका दर्शनीया भगवतो पादवन्दीयो तेषां ते पुत्र मातृसंज्ञा उपस्थापयितव्या । आगच्छन्ति पुत्र स्त्रीकुमारीयो प्रासादिका दर्शनीया आभरणभरिता तत्र ते पुत्र छन्दो न करणीयो अपि तु ते

çeyati vrikshamule çayyâ ° lâkuleṁshu ° cchishṭhâni bho° BM °bhuṁjati | araṇyâ° B °nâma sukumâro eva sukhokhocitâ te° BM °saṁbhuṇitvâ tad va° M °nâbhibhaṇishyâmi || B °maḥ a°.

3. M °vrajishye atya ° shyâmaḥ || . — 5. M °dyatra kvacid dhṛi ° mamaivaṁ ° jishyam anve°.

8⁴. BM °si mama ca aryya(M °akâryyaṁ)kaṁ°. — 9². M bâḍhaṁ tya°. — 10. M yadi putra çriṇu tâvad evatyaçyaṁ° B °jasi || tato° M °si tataḥ shaḍiṁdriyebi° BM °vṛittagupta° M °viharatitavyaṁ bhâjanena ca te mâtṛijñâtâ°.

11. M °pararâtrâ jâ° BM °yukte bha°. — 12. BM âlabdha° M °ryeṇa bha° BM °vyaṁ sthâ°. — 13¹. BM sthânaṁ caṁ° M °kramaṁ nisha°. — 13². M °tyajitavyaṁ | . — 14¹. M naççaivaṁ bu ° bhiniçrami°. — 15. BM °tra ânetavyaṁ aprâ°.

16¹. BM °vṛittena ca°. — 16². M °hetor âga°. — 17. B °cchanta hi° M °cchantar hi putra strî° BM °mahelikâ prâ° M °pâdavaṁdîyo teshâṁ te mâtṛiputra u° B °shâṁ te pu mâtṛi ° vyâ â°. — 18. M âgacchaṁti pu° B °gacchati pu° M °ṇabhâritâ° BM °cchandâ na ka° M °khânupaçyanâ viharitavyaṁ || amanâtmapaçyinâ viharayitavyaṁ || ani° B °khânupaçyinâ viharitavyaṁ | ani°.

पुन तस्मिं समये दुःखानुपश्यिना विहरितव्यं अनित्यानुपश्यिना विहरितव्यं ॥ यदि शक्नोषि पुन राहुल प्रव्रज्यातो चित्तं विनिवर्तयितुं ततः सप्रसादो भवाहि ॥

अथ खलु राज्ञा शुद्धोदनेन कपिलवस्तुनगरे आज्ञप्तिका दिन्ना । यत्तकं कपिलवस्तुस्मिं नगरे सामन्तं द्वादश योजनानि यत्किंचिद्गन्धं च माल्यं च पुष्पं च चूर्णं च तं सर्वं समुदानयथ । यत्तका नटनर्तकल्लमल्लपाणिस्वरिका संनिपातेथ ॥

मनसा देवानां वचसा पार्थिवानां
अचिरेणाढ्यानां कर्मणा दरिद्राणामिति ॥

राज्ञो वचनमात्रेण तं नगरमलंकृतं शोधितं अपगतशर्करकठल्लं धूपघटिकाविधूपितं अवसक्तपट्टदामकलापं चित्रदुष्यपरिक्षिप्तं विततवितानं मुक्तपुष्पावकीर्णं ॥

किंकारणा विविधमाल्यभूषणा प्रथमयौवनधरीयो ।
शृंगाटके स्थितानि बहूनि प्रमदासहस्राणि ॥
प्रासादगर्भनिलया कुमारिका . . . . तदा आसि ।
मृगिका व त्वरितत्वरिता ओलोकनका निधावन्ति ॥
शुद्धोदनआत्मजस्य पुत्रो बुद्धस्य राहुलो नाम ।
विजहिय . . . . भगवां राज्यं चवहाय प्रव्रजति ॥

1. BM °tuṃ tataḥ(M °tato) aprasâdaṃ bha°. — 3¹. B °râjñe çu° M °râjño çu ° dinnâḥ || B °nnâ ya°. — 3². M °stusmin na ° maṃtaṃ dvâ ° cid gaṃdha ca mâ°. — 5. M °tanâṭakâ ṛi° B °pâstvarikâṃ saṃ° M °svarakâ saṃ°.

6. B °devânâm acireṇâdyânâṃ ka° BM °rmaṇâṃ da°. — 8. B râjñe vaca° BM °kṛitaṃ | ço° B °rkalakatha° BM °ṭikânidhûpitaṃ(B °taṃ |) avasa(M °vaça)kta° B °dushyaṃpari° M °kshitaṃ vitatavi° B °rṇṇaṃ tada°. — 10. BM tadaho saptame divase gṛihadvâre pi mahârghâ(M °hârhâ) dhûpadhûpâni ubhayato pi anuttarâ saṃ(M °sa)myaksaṃbo-(M °bu)dhim abhisaṃbuddho âkâçagamanakâni ca purâṇi idâniṃ(M °nîṃ) vayaṃ kumâro abhiniṣhkramato paçyishyâmaḥ(M °mo) | gâthâ ca malâ vimalâ caḍavikâ pi tato vâ(M °lâ catu vikopitaḥ câ)risiktasanmṛi(M °saṃsṛi)shṭaṃ dhûpaṃ gehadvâra(M °re) nagara kiṃ anaghana(M °naṃ)kshatragṛihâṇi(M °ni) navakâni trikaikokîrṇṇâ janasya bhavi(M °bhari)tâ dâ(M °de)hâ[348ᵃ]ni manujâtîye nârîye vâ(M °câ)raṇyagatâm atho(M °thrâ)jîvo paṃ-(M °yaṃ)ca kiṃ°.

13. B °gâtake sthi ° bahuni pra° BM °ṇi prâ°. — 14. B °sâde garbhanilayâ kumârikâ addaçâ mṛigîkâ ca tadâ âsi mṛi° M °layâ kulikâ adṛiço mṛigîkâ ca tadâbhâsi mṛi°. — 15. BM mṛigikâ ca tvarita° M °lokanikâ nidhyâvaṃti B °nti çu°.

16. BM °danâtma ° ma vi°. — 17. B vijahiyahi bha° M vijahi vahir bhagavân râjyaṃ câvahâ° B °jyaṃ câvahâ ca pravrajiti pa°.

पटहानि च वीणायो वादेन्ति वरस्वरा प्रमुंचति ।
आहन्यन्ति मृदंगा न चिरं निर्यास्यति कुमारो ॥
वल्लकिपरिवादिनीयो मधुरं गुमुगुमुन्ति वीणपरिघटिता ।
. . . . . . . . . . न चिरं निर्यास्यति कुमारो ॥
द्वीपिअजिनेहि विचित्रो सनन्दिघोषो रथो परिच्छन्नः ।
अभिरुह्य रथं . . . . अभिमनो कुमारो भिनिष्क्रमति ॥
कामस्वस्त्ययनानि पाणिघटसहस्रा अमितयशस्य ।
निनंदिंसुः अग्रतो राहुलस्य अभिनिष्क्रमन्तस्य ॥
एते अंशुकशिखरीजाता शाटककम्बलकनिवस्ता ।
हस्तिस्कंधवरगता कुमार निर्यान्तमनुयान्ति ॥
एते अंशुकशिखरीजाता शाटककम्बलकनिवस्ता ।
विचित्रसुमधुरभणिता कुमार निर्यान्तमनुयान्ति ॥
रथयुग्ययानयोजनं समाचितं शिरिये विय पश्यन्ति ।
पुनः अश्रुपूर्णनयना राज्ञो अन्तःपुरिका दुःखिता ॥
वारणचकोरनयनो संप्रति नगरद्वारमनुप्राप्तः ।
इन्द्रो व मरुहि परिवृतो अन्तःपुरिकाहि ललिताहि ॥
न्यग्रोधारामं गतं नरुत्तमं नायकं पुरुषसिंहं ।
उपगम्य कनकवर्णं नरुत्तमं राहुलो पितरं ॥

1. BM padumaṁ ca vìṇànànananti(M °ṇà vàdaṁti) sva° B °muñcati à°. — 2. B àlayishyanti° M àlishyaṁti mṛidaṁgàni ca taṁ niryàsyati | ku° B °daṁgàn na cittaṁ niryà° màro ma°. — 3. B mallakiparivàniyo° M °vàdaniyo madhukariyo madhuraṁ gumugumuṁti ko° BM °ghaṭṭitàyo na vicàràṁ na(M °yo na ciràn na) niryà°. — 4. B °ro dvì°. — 5. M dvipi ajini vi° B °ajini vi° BM °citràṇi sanandi(M °naṁdi)ghosho ravo paricchinnaḥ (M °ricchaṁtà) a°.

6. BM °kumàro nishkramato kà°. — 7. M kàmacakrasvastipà° B °svastipàṇi° BM °sràṇi ubhaya(M °bhapa)yaçasya ni°. — 8. M ninaṁditsuḥ agra° B ninandiṁsuḥ | agra° M °shkramaṁtasya B °ntasya te°. — 9. BM te aṁçukaçikhalijàlaṁ(M °jàsaṁ) tasya àcaranta(M °raṁta)kà nicastà(M °catà) ha°. — 10. M °ganà kumàraṁ niryàta || anuyàṁti || B °ryàtaṁ a°.

11. BM °çikhalijàtà aṭà(M °ṭṭà) àvanantaka(M °naṁtakà)nivastrà vi(M °stràṇi)citrà°. — 12. B °dhuro bha° M °dhurà bharità ku° BM °ryàtaṁ anujàti(B °ti |). — 13. BM °yugà(M °yugya)yàcanaka samacitaṁ giridevi(M °vi)yo aparehi pu°. — 14. M punar açrupùrṇo nayano ràjño aṁtaḥpu° B °nayano | rà° M °khito B °khità và°. — 15. B °cakàranayenà saṁ° M °koranayana saṁ°.

16. BM in(M iṁ)dro ca ma° to aṁtaḥpu° BM °tàhi nya°. — 17. B °gata nanutta° M °taṁ narotta° BM °haṁ u°. — 18. M °varṇena narotamaṁ ràhulo pi° B °varṇṇena naruttamàṁ ràhulo pitaraṁ va°.

वन्दति च उत्तमयशं यशप्राप्तो मृदुतलेहि जालेहि ।
शीर्षं परिमार्जते च नरर्षभो कुंजरपुत्रस्य ॥
किं राहुलभद्र फलिता नियमप्रेक्षा त्वं सकरुणरूपं ।
विजहिय भवान्तको भव क्षिप्रं स्पर्शेहि निर्वाणं ॥

भगवां दानि आयुष्मन्तं शारिपुत्रमामन्त्रयति ॥ प्रव्राजेहि शारिपुत्र राहुलं सकुटिको ते भविष्यति ॥ स्थविरो दानि भगवन्तं पृच्छति ॥ कथं भगवं प्रव्राजयिष्यं ॥ भगवानाह ॥ यथा शारिपुत्र आर्यें धर्मविनये प्रव्रज्या कुमारभूतस्य ॥ भणाति अहं राहुलो बुद्धं शरणं गच्छामि धर्मं शरणं [348b] गच्छामि संघं शरणं गच्छामि । द्वितीयं पि अहं राहुलो बुद्धो मे शरणो अनन्यशरणो धर्मो मे शरणो अनन्यशरणो संघो मे शरणो अनन्यशरणो ॥ अहं राहुलो यावज्जीवं प्राणातिपातात्प्रतिविरमिष्यं यावज्जीवमदत्तादानात्प्रतिविरमिष्यं यावज्जीवं कामेहि मिथ्याचारात्प्रतिविरमिष्यं यावज्जीवं मृषावादात्प्रतिविरमिष्यं यावज्जीवं सुरामैरेयमद्यप्रमादस्थानात्प्रतिविरमिष्यं उपासकं मे धारेहि इमेहि पंचहि शिक्षापदेहि ॥ अहं राहुलो बुद्धं भगवन्तं प्रव्रजितमनुप्रव्रजामि द्वितीयकं पि बुद्धं भगवन्तं प्रव्रजितमनुप्रव्रजामि तृतीयं पि राहुलो बुद्धं भगवन्तं प्रव्रजितमनुप्रव्रजितो हमस्मि ॥ अहं राहुलो यावज्जीवं प्राणातिपातात्प्रतिविरतो वैरमणं श्रामणेरस्य शिक्षापदं यावज्जातरूपरजतप्रतिग्रहणशिक्षापदं धारयामि । इमे हि दश शिक्षापदानि ॥ स्थविरो दानि राहुलस्य केशान्योतारेत्वा प्रव्राजेत्वा दक्षिणेन हस्तेन

1. M caṁdati° BM °uttimayasaṁ yaça(M °saṁçaya)matto mṛi ° jâlehi çî°. — 2. B mârjante° M °rjjate caraṁ nararshabho kuṁjalapu° BM °putraṁ ki°. — 3. B kin râhu ° BM °dra sphalitaṁ ni° B °preksho seka° M °kshâ sakaruṇarupaṁ° B °paṁ vi°. — 4. BM °ya bhava bhavanta(M °vaṁta)do sparçe°. — 5[1]. M atha bhagavân dâniṁ âyushmaṁtaṁ çâliputram âmaṁtrayati || B °ti pra°. — 5[2]. BM pravrajehi çâ ° hulakâ kuṁḍdi(M °kuṁḍi)yako°.

6[1]. M °dâniṁ bhagavaṁtaṁ pṛi° BM °ti ka°. — 6[2]. M °gavan pravrajishyaṁ || B °pravrajishyaṁ ||. — 7[2]. M °çâliputra âyaṁ dha° BM °sya bha°. — 8. BM °ti || ahaṁ râhula bu° M °saṁghaçara°. — 9. M °ddho me çaraṇo dharmo° BM °gho me çaraṇo araṇyaçaraṇo ||. — 10. BM °prâṇâtipâtaṁ viramishyaṁ | yâ dânât pra(B °nân pra)tiviramishyaṁ | yâ° M °cârâd viramishyaṁ | yâ° B °cârât prativiramishyaṁ | yâvanmṛishâ ° shyaṁ | yâvajjî° M °surâvaireyamadyapramodasthâ° BM °dhârehi || i°.

14. M ahaṁ râhulo buddhaṁ bhagavaṁtaṁ pravrajitam anupravrajito ham asmi || B °dvitiyakaṁ pi || bu ° jitaṁm anu ° ham asmiṁ ||.

16. M °lo yâvatjîvaṁ prâ° BM °pâtân prativi° M °ṇaṁ çravaṇe° B °ṇaṁ çramaṇerasya çikshâpadaṁ | yâ° BM °vajjîvaṁ rûparajatapra(B °prâ)tisahasrâṇi çi°. — 17. B imehi daçehi çikskâ° BM °padehi stha°. — 18. M °keçâṇyavatâritâ pravrâjitvâ da° B °otâritâ pravraje° M °ṇe hastena çâlipu° B °mauṅgalyâ ° starake u° BM °çetsuḥ |.

शारिपुत्रो गृहीत्वा वामतो मौद्गल्यायनो तृणसंस्तरकं उपविशेन्सुः ॥ एवं दानि भगवां कर्तव्य. . . . .

दिवि भुवि च विश्रुतयशं विनीतगणश्रावकं विपुलप्रज्ञं ।
श्रावकयुगं दशबलो आमन्त्रये वरकाञ्चिकारो ॥
तीक्ष्णा हि इन्द्रियाणि आज्ञास्यति राहुलो इमं धर्मं ।
प्रव्रजतु कुमारो सो कृतानुकारी भवतु मह्यं ॥
कालज्ञो शारिसुतो . . . . . लोकनायकं अवचि ।
प्रव्राजेमि कथमहं राहुलश्रिरि मात्मजं जिनस्य ॥
लोकमनुकम्पमानो ब्रह्मस्वरो नायको समाख्याति ।
यथ आर्यधर्मविनये प्रव्रज्या कुमारभूतस्य ॥
वामेन ग्रहेत्वा मौद्गल्यायनो दक्षिणेन उपतिष्यो ।
प्रव्राजेत्वा एतं तृणसंस्तरकं उपविशेन्सुः ॥
सो वलयकानि सुवर्णसूत्रं च यस्य काये ओहरति ।
न भूयो चरे दुःखार्त्तो आर्त्ता स्मरन्ति दशबलस्य ॥
वारणचकोरनयनं माता पुत्रं विशालताम्राक्षं ।
उत्संगे स्थापयित्वा इमाहि गाथाहि अध्यभाषि ॥
उत्तमप्रावारधरो अनुलेपनरागवासितशरीरः ।
दुःचरकं श्रामण्यं अत्यन्तसुखोचितेन त्वया ॥
तायीनां प्रमुदितव्यं चोलकखण्डा वर्चे खनित्वान ।

1. M eve dâniṁ bhagavân kartavyo di° B °rttavyâ di°. — 3. B °bhuvi va viçrute jaçaṁ | dvitîyagaṇe çrâ° M °bhuvi çruyate yaçaṁ || dvitîyemaṇe çrâ° BM °prajñâ çrâ°. — 4. BM °yuga daça° M °âmaṁtraya kara° B °ntra kara°. — 5. M tîkshṇehi iṁdrâni â° B °hi indrâṇi âjñosyati | râ° M °ima dha° BM °rmaṁ pra°.

6. M pravrâja° B °vrajetu ku° BM °mâraṁ kri° B °tu | mahyaṁ kâ°. — 7. BM kâlajño(M °jñâ) tâni suto lo ° ci pra°. — 8. M °çirimâtsajaṁ° BM °sya lo°. — 9. B °brahmâsvaro° M °ko sa samâuakhyâti || B °khyâti pa°. — 10. B patharyaṁ dha° M yathâyaṁ ca dha ° jyâ ca kumâraṁbhû° BM °sya vâ°.

11. M vâmena gṛihîtvâ° BM °mauṅgalyâ° M °tishyoṇa B °tishyeṇa pra°. — 12. BM °vrâjema(M °ma || ) mâ tṛi° M °viçâtsuḥ B °çetsuḥ || . — 13. BM esha bâlaya-(M °lapa)trakâni° M °ṛṇasutraṁ° BM °ti na bhû°. — 14. B °yo cariṁ duḥkhavarttâ ârttaṁ sma° M °yo rariṁ duhkhârttâ ârtasvaranti° BM °sya vâ°. — 15. B °yanâ mâ° M °yana mâ° B °viçâtâmrâkshaṁ u°.

16. M utsaṁga sthâ°. — 17. BM uttamaṁ pi baṁdhutadharo ° pananâga° M °riro. — 18. M duçcarikaṁ çrâvaṇyam atyaṁtasukhâvitena B °tena tra°. — 19. BM trayâṇâṁ pra° M °muditayo volakha° B °ditavyâ colakha° BM °ṇḍâvacakani(M °kari)tvâna u°.

उच्छि[349ᵃ]ष्टं भोक्तव्यं अपि राहुल कुम्भदासीये ॥
तुवं सुवर्णनूपुरो . . . . . . . . . . . . ।
उत्तप्तकांचनसवर्णो ज्ञाती तुह्यं अभिरमेन्ति ॥
किन्तव पुत्र अरण्येन श्रुत्वा तासां घोषं वीणानां ।
मधुरमंजूघोषाणां . . . . . . . नकुलकानां ॥
न धारेसि इमस्मिं प्रावचने . . . . . . एहि पुत्र ।
प्रतिगच्छ पराङ्मुखो न हि सुलभं अच्युतं स्थानं ॥

राहुल आह ॥

यदि मातः केचिदुद्घटितज्ञा ममापि तत्र गणयाहि ।
अहमपि हि क्लेशमथनो अनुगंसं पैतृकं मार्गं ॥
निशिशाति नापितो खुरं राहुलो च मणिचूडं मुंचेति ।
तदा अभिमनो . . . . . अनुस्मरन्तो द्विपदश्रेष्ठं ॥
दृष्ट्वा च मं अभिमनं उद्युक्तं शासने दशबलस्य ।
तं प्रापुणाहि क्षिप्रं स्पृश निर्वाणं सुखं शान्तं ॥
ये ते पुत्रक धर्मा जातिं च जरां च वीतिवर्तेन्ति ।
तां प्रापुणाहि क्षिप्रं इति राहुलं अपि सो अवच ॥
तां शिरसिजसल्लेखां आवल्गितनीलकण्ठसहवर्णां ।

1. B °vyaṁ | a° M °la kuṁbhadâ° BM °sîye tvaṁ°. — 2. B tvaṁ suvarṇṇavupurc narorimahilikho u° M tvaṁ suvaraṇavipulo narorishahilikhâ u°. — 3. B °balâ nânutuhya a° M °balâ nâṁ nu tuhya abhirasaṁti B °nti ki°. — 4. BM °putro a° B °tvâ ca nâsâṁ° M °tvâ ca tâsâṁ ghoshâṁ vi° BM °nâṁ ma°. — 5. M °ṇâṁ ca hite ca naku° B °ṇâṁ hite ca nakulakânâṁ na°.

6. M ta dharmesi° B na dhamesi° M °prâvaraṇena ehi° B °nena | ehi putra pra°. — 7. M pathigacchaṁ pâraṁ kiyena hi° B °ccha pâraṁ kiyo na hi° M °surabha ya cyuta sthânaṁ ‖. — 9. BM °ṭitajño ma ° hi a°. — 10. BM °gaṁsemi pai° M °mârga ni° B °mârgaṁ ni°.

11. BM °niçinati nâ° M °to kharaṁ râ ° ṇicaḍaṁ muṁcati B °muṁcati | . — 12. BM °no anu° M °smaraṁto dvi° B °çreshṭaṁ dṛi°. — 13. B °ca naṁ avima° M °bhishanaṁ udyuktaṁ sayenama va hareti dhigaṁsâmâsane da° B °ktaṁ samayena me va hareti dhigamâ sâsaṇe da° BM °sya taṁ°. — 14. B °puṇehi° M °puṇehiḥ kshi° ṇaṁ mukhaṁ çâṁtiṁ ete°. — 15. M ete pu° BM °dharmajâ° M °vîthivartaṁti B °varttanti taṁ°.

16. BM taṁ prâ° M °puṇehi° BM °hula api(B °ârpi)kâ avaca taṁ(M °naṁ)°. — 17. BM taṁ(M naṁ) çirasijâ allekhâ | avarṇṇikânte(M °khâ avarṇakâṁte)hi sahabalâṁ u°.

न्भिक्षवः वेदना अनात्मा तस्माद्वेदना आबाधाय दुःखसमुदयाय संवर्तति न चात्र ऋध्यति कामकारिकता एवं मे वेदना भवतु एवं मा भवतु ॥ इयं संज्ञा चेत् भिक्षवो आत्मा अभ[371a]विष्यन्न भवति संज्ञा आबाधाय दुःखाय ऋध्यति च कामकारिकता एवं मे संज्ञा भवतु एवं मा भवतु । यस्मान्भिक्षवः संज्ञा अनात्मा तस्मात्संज्ञा आबाधाय दुःखाय संवर्तति न चात्र ऋध्यति संज्ञाया कामकारिकता एवमेव संज्ञा भवतु ॥ संस्कारा भिक्षवः आबाधाय संस्कारा चेन्भिक्षवः आत्मा अभविष्यन्न चैते संस्कारा आबाधाय दुःखाय संवर्तन्ति ऋध्या च संस्काराणां कामकारिकता एवं मे संस्कारो भवतु एवं मे मा भवतु । यस्मान्भिक्षवः संस्कारा अनात्मा तस्मात्संस्कारा आबाधाय दुःखाय संवर्तन्ति न चात्र ऋध्यति कामकारिकता एवं मे संस्कारा भवन्तु एवं मा भवन्तु ॥ विज्ञानं चेन्भिक्षवो आत्मा अभविष्यत् नेदं विज्ञानमाबाधाय दुःखाय संवर्तति ऋध्येच्च विज्ञानस्य कामकारिकता एवं मे विज्ञानं भवतु एवं मा भवतु । यस्मान्भिक्षवो विज्ञानमनात्मा तस्माद्विज्ञानं आबाधाय दुःखाय संवर्तति न चात्र ऋध्यति कामकारिकता एवं मे विज्ञानं भवतु एवं मा भवतु ॥ तस्मादिह भिक्षवो एवं शिक्षितव्यं ॥ यत्किंचिद्रूपं अध्यात्मा वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यं दूरे अन्तिके वा अतीतानागतप्रत्युत्पन्नं वा सर्वं रूपं नैतं मम नैषो हमस्मि न एतदात्मेति एवमेतं यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं । या काचिद्वेदना या काचित्संज्ञा ये केचित्संस्कारा यं कंचिद्विज्ञानं अध्यात्मं वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा

2. M °ced bhiksha° BM °shyan na(M °shyat na) bhavati sam̃(B °sa)jñâ â ° khâya ridhya(M °ddhya)ti ca° M °makârîmatâ | evam̃ me° B °jñâ bhavatu evam̃ me mâ bhavatu ya°. — 4. M °kshavo sam̃jñâ anâ ° t sam̃ âbâ° BM °tra ridhya ° makârîmatâ | evam̃ me sam̃jñâ bhavatu evam̃ mâ bhavatu || .

6. M °bhikshavo âbâ ° kshavo âtmâ° B °shyat na cai° BM °te sam̃skâro âbâ° B °khâya sam̃varttenti ṛiddhyâ ca° M °rttati ridhyâ va sam̃skârâṇâm̃ kâmakârîgatâ || evam̃ me sam̃skârâ bhavatu evam̃ mâ° B °katâ evam eva sam̃°. — 8. M °kshavo sam̃skârâ anâtma ta ° rttati na° BM °tra ridhya° M °makârîmatâ | evam̃ me sam̃skâ bhavatu evam̃ mâ bhavatu || B °katâ evam eva sam̃°. — 10. BM vijñânam̃ bhiksha° M °shya nedam̃° B °sam̃varttenti ṛi° M °dhye va vijñânam̃ kâmakârîmatâ | evam̃ me° B °cca vijñânam̃ kâmakârikatâ eva me°.

12. B °vo vijñânam̃m anâ° M °vo vijñânam̃ anâ °khâya samvartta ° tra ridhya ° rimatâ | eva me° B °me vijñânam̃ me bhavatu e° M °nam̃ bhavatu mâ evam̃ bhavatu || . — 14a. BM °vâ çûkshmam̃ ° ṇîtam̃ vâ ye dû° B °tânagate pratyunprannam̃° M °tam̃ mama esho ham asmim̃ naitam̃ mama etam̃ âtmeti | evam̃m evam̃ ya° B °smin na etad amâtme°.

17. BM °skârâ ya(M °ye) kecid vi ° dhyâtmam̃(B °tma) vâ° vâ çûkshmam̃° M °rvam̃ vijñânam etam̃ ° smi naita° B °ham̃ asmim̃ na°.

हीनं वा प्रणीतं वा यं दूरे अन्तिके वा अतीतानागतप्रत्युत्पन्नं वा सर्वं विज्ञानं नैतं मम नैषो हमस्मि न एतमात्मेति । एवमेतं यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं ॥ इदमवोचद्भगवां वाराणस्यां विहरन्तो ऋषिवदने मृगदावे इमस्मिं च पुनर्व्याकरणे भाष्यमाणे आयुष्मत आज्ञातकौण्डिन्यस्यानुपादायाश्रवेभ्यश्चित्तं विमुक्तं चतुर्णां च भिक्षूणां विरजं विगतमलं धर्मेषु धर्मचक्षु विशुद्धं आयुष्मतो अश्वकिस्य भद्रिकस्य वाष्पस्य महानामस्य, त्रिंशतीनां च देवकोटीनां विरजं विगतमलं धर्मेषु धर्मचक्षुं विशुद्धं ॥ आत्तमना आयुष्मन्तो पंचका भद्रवर्गिका भगवतो भाषितमभ्यनन्दे ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थमभिसंभावयित्वा वाराणस्यां विहर[371ᵇ]ति ऋषिवदने मृगदावे ॥ तत्र खलु भगवां आयुष्मन्तां पंचकां भद्रवर्गिकां आमन्त्रयसि ॥ सचेन्मन्यथ भिक्षवः किंमूलिका उत्पद्यन्ति शोकपरिदेवदुःखदौर्मनस्यउपायासाः संभवन्ति किंजातिका किंप्रभृतिका ॥ एवमुक्ते आयुष्मन्ता पंचका भद्रवर्गीया भगवन्तमेतदुवाचत् ॥ भवमूलका खलु भगवन्धर्मा भवनेत्रिका भगवन्भवप्रभवा भगवन्भवप्रतिशरणा साधु भगवां भिक्षूणामेतमर्थं भाषे । भिक्षू भगवतो संमुखाच्छ्रुत्वा संमुखात्प्रतिगृहीत्वा तथत्वाय धारयिष्यन्ति ॥ एवमुक्ते भगवां पंचकां भद्रवर्गिकां एतदवोचत् ॥ रूपमूलका भिक्षवः उत्पद्यन्ति शोकपरिदेवदुःखदौर्मनस्योपायासास्संभवन्ति रूपजातिका रूपप्रभृतिका । वेदनामूलका संज्ञामूलका संस्कारमूलका विज्ञानमूलका भिक्षवः उत्पद्यन्ति शोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति विज्ञानजातिका विज्ञानप्रभृतिका ॥

सचेन्मन्यथ भिक्षवो रूपं नित्यं वा अनित्यं वा ॥ अनित्यं हि तं भगवं ॥ रूपस्य

2. BM °bhûtaṁ saṁmya°. — 3. M °shipattane mṛi ° puna vyâkaraṇe ° ne âyushmatâ-jñâ ° dâçrave° B °dâyravebhya° BM °bhikshû(M °kshu)ṇâṁ vi° dharmaca(M °rmava)kshu viçuddhâ(M °ddhaṁ)ni âyushmato duçca(M °to 'çva)ki ° triṁçatitâṁ ca de° M °koṭinâṁ ° rmacakshu vi° BM °çuddhâni â°.

7. BM °ttamano â°. — 9. M atha khalu bhagavân saṁmya° B bhagavân saṁmya° B °tam arthaṁm abhi ° hari[f° 371ᵇ]shyati | ṛi° M °shipattane mṛi°. — 10. M °gavân âmushma° B °shmantâ paṁ° BM °dravargikâm âmantrayesi(M °yati) | .

11. BM saced anya° M °vaḥ kiṁmuli° BM °daumanasyaü(M °syo)pâ° M °yâsâ saṁ°. — 12. M °shmantâḥ paṁ ° dravargikâ bha° B °rgîyâ bhavanta° M °d uvâca ‖. — 13. BM evaṁmûla° M °trikâ bhagavan tava prabhâvâ bhaga ° dhu bhagavân bhikshuṇâm e°. — 14. M bhikshur bha ° tvâ saṁmukhân prati° B °gṛihitvâ ta°. — 15. B °rgikâm e°.

16. M °kshavar utpa° BM °bhavati | rû° B °bhṛitikâ ve°. — 17. M vadanâ ° kshavo u ° syopâyâso sambhavaṁnti ‖ vijñânajâ° B °sâḥ saṁbhavâ bhavanti°. — 20¹. M saced anyathâ bhikshavaḥ rû° B °nyathâ bhi° BM °anityaṁ vâ a°. — 20². M °gavan | . — 20³. BM khalu ° kshavaḥ(M °vo) anityaṁ vâ viditvâ caratâṁ(M °rantâṁ) prabhaṁguratâṁ vipariṇâ ° padyetsuḥ â ° dâhaghâsa° B °jvarâ saṁkle ° punaḥbhavikâ âyatyâ âyatyâṁ°.



IMPRIMERIE NATIONALE.

खलु पुनर्भिक्षवः अनित्यतां विदित्वा चलतां प्रभंगुणतां विपरिणामविरागनिरोधतां विदित्वा ये रूपप्रत्यया उत्पद्येन्सुः आस्रवा विघाता परिदाघा सज्वरा सांक्लेशिका पुनर्भविका आयत्यां जातिजरामरणीयास्ते निरुध्यन्ते । तेषां निरोधान्न उत्पद्ये आस्रवा विघाता परिदाघा सज्वरा सांक्लेशिका पौनर्भविका आयत्यां जातिजरामरणीया ॥ सचेत् मन्यथ भिक्षवो वेदना संज्ञा संस्कारा विज्ञानं नित्यं वा अनित्यं वा ॥ अनित्यं हि तं भगवन् ॥ भगवानाह ॥ साधु भिक्षवो विज्ञानस्य खलु पुनर्भिक्षवः अनित्यतां विदित्वा चलतां प्रभंगुणतां विपरिणामविरागनिरोधतां विदित्वा ये विज्ञानप्रत्यया उत्पद्येन्सुः आस्रवा विघाता परिदाघा सज्वरा सांक्लेशिका पौनर्भविका जातिजरामरणीयास्ते निरुध्यन्ति व्युपशाम्यन्ति प्रहाणमस्तं गच्छन्ति । तेषां निरोधान्नोत्पद्यन्ति विज्ञानमूलका आस्रवा विघाता परिदाघा सज्वरा सांक्लेशिका पौनर्भविका आयत्यां जातिजरामरणीया विज्ञान[372a]जातिका विज्ञानप्रभृतिकाः । तस्मादिह वो भिक्षवः एवं शिक्षितव्यं ॥ यत्किंचिद्रूपं अध्यात्मं वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यं दूरे अन्तिके अतीतमनागतं प्रत्युत्पन्नं सर्वं रूपं न एतं मम न एषो हमस्मि न एषो आत्मा ति एवं वो भिक्षवः शिक्षितव्यं ॥ या काचिद्वेदना या काचित्संज्ञा ये केचित्संस्कारा यत्किंचिद्विज्ञानं अध्यात्मं वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यं दूरे अन्तिके वा अतीतानागतप्रत्युत्पन्नं नैते मम नैषो हमस्मि नैष आत्मा ति । एवमेतं यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं ॥ इदमवोचद्भगवान्वाराणस्यां विहरन्तो ऋषिपतने मृगदावे इमस्मिंश्च पुन व्याकरणे भाष्यमाणे आयुष्मा आज्ञातकौण्डिन्यो बलवशीभावं प्रापुणेसि । चतुर्णां भिक्षूणां अनुपादा-

3. B °rodhâm̃ na u° M °rodhe utpadyante âçra° B °jvarâ sam̃kle° M °çikâ punarbha° BM °vikâ âratyâ jâ° B °ṇîyâ sa°. — 5. BM sacet a(M °d a)nya° B °skâro vi° anityam̃ vâ ni°.

6¹. B ni°. — 6². B °puna bhikshavaḥ° M °carantâm̃ prabham̃gulatâm̃ viparînâmavirâganiro° B °guratâm̃ vipariṇâ° BM °jñânapratyayo utpadyetsuḥ âçra° B °dâghâ sam̃jva° M °çikâ punarbha° hâṇaçastram̃ ga° B °hâṇasasta° BM °gacchati te°. — 10. M °rodho notpa° BM °dyanti | vijñânamû° B °ṇîyâyâ vijñânajâ° M °bhṛitikâ B °bhṛitikâs tasmâ°.

12. M °kshavo e°. — 13. M °t kim̃cit rûpam̃ adhyâ° M °hînam̃ vâ prahînam̃ vâ praṇî° dûranti° rvam̃ naitam̃ rûpam̃ mama naisho ham asmi naisho â° B °ham asmim̃ na esho â° BM °vam̃ bho bhi° M °kshavo çi° B °vyam̃ yâ°. — 15. BM °jñâ yâ(M °ye) kecit sam̃° nnam̃ naite(M °tam̃) mama naisho ham asmim̃ naisha(M °sho) â°.

18¹. M evam evam̃ ya° tam̃ sam̃mya°. — 18². M °bhagavâm̃ vârâṇa° shipattane mṛi° smim̃ ca pu° nyo vasavaçî° B °nyo cala° ṇetsuḥ | M °ṇetsuḥ. — 20. M °bhikshuṇâm̃ anupâdâyaçra° B °ç cittâyâni vimu° BM °kisya bhaddrika° M °pam̃câṅgikâ° B °gikâyâm̃ ca de° M °tînâm̃ vigatamalam̃ virajam̃ dharme° cakshum̃ viçuddhâni B °cakshum̃shi viçuddhânâni â°.

यास्रवेभ्यश्चित्तानि विमुक्तानि आयुष्मतो अश्वकिस्य भद्रिकस्य बाष्पस्य महानामस्य पंचांगिकानां च देवकोटीनां विरजं विगतमलं धर्मेषु धर्मचक्षूंषि विशुद्धानि । आत्तमना आयुष्मन्ता पंचका भद्रवर्गिका भगवतो भाषितमभिनन्दे ॥

भगवां सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थमभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे । तेन खलु पुनः समयेन त्रयो भिक्षू वाराणसीं पिण्डाय प्रक्रमे । तेषां भिक्षूणां भगवां चेतसा चित्तानि अधिष्ठाय ओवदे अनुशासनं अनुशासे ॥ एवं भिक्षवः मनसा करोथ एवं मनसीकरोथ इमां वितर्कां वितर्कयथ आत्मद्वीपा भिक्षवो विहरथ अनन्यद्वीपा आत्मशरणा अनन्यशरणा धर्मद्वीपा धर्मशरणा अनन्यशरणा । तेहि ततो भिक्षवः आत्मद्वीपेहि विहरन्तेहि अनन्यद्वीपेहि धर्मद्वीपेहि धर्मशरणेहि अनन्यशरणेहि योनिशो उपपरीक्षितव्यं किंमूलका उत्पद्यन्ति शोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति किंजातिका किंप्रभृतिका ॥ एवमुक्ते भिक्षू भगवन्तमेतदवोचत् ॥ भवमूलका भगवन्धर्मा भवनेत्रिका भगवन्भवप्रभवाः भवप्रतिशर[372$^b$]णा । साधु भगवां भिक्षूणामेतमर्थं भाषे भिक्षू भगवतः संमुखाच्छ्रुत्वा संमुखात्प्रतिगृहीत्वा तथत्वाय धारयिष्यन्ति ॥ एवमुक्ते तां भिक्षू भगवानेतदवोचत् ॥ रूपमूलका भिक्षवो उत्पद्यन्ति शोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति रूपजातिका वा रूपप्रभृतिका वा । सचेत् मन्यथ भिक्षवः रूपं नित्यं वा अनित्यं वा ॥ रूपं अनित्यं होदं भगवन् ॥ साधु भिक्षवः रूपस्य खलु पुनर्भिक्षवः अनित्यतां विदित्वा दुर्बलतां प्रभंगुणतां विपरिणामविरा-

3. B °bhinandaḥ ‖. — 4. M atha bhagavân sammya° B °vâm̃ sam̃mya ° ti ‖ ṛi° M °shipattane mṛi°. — 5. BM °yena dvau bhikshû° B °me tra°.

6. B trayo bhikshu bha° M trayo bhikshur bhagavân cetovasitâyam̃ ci° B °cetasâyam̃ ci° M °shṭhâye ovade âruçâ° B °de ânusâsanam̃ ânuçâse ‖. — 7. M °sâ karotha evam̃ mânasikarotha | imâm̃ vitarkâ vitarkayatha âtmadîpâ bhikshavaḥ viha° B °rkaya | imâm̃ vitarkâm̃ vitarkayatha âtmadvîpa bhi° M °tmaçaraṇâ ananyaçaranâḥ dharmadvî° BM °nyaçaraṇâ(M °ṇâḥ) te°. — 9. M °bhikshavo âtma° BM °ntehi ananyadvîpehi ananyaçaraṇehi dharmadvî° B °ṇehi | yo° M °yoniço upaparîksha° B °kshatavyaḥ kim̃m° BM °daumа-(B °rma)nasopâyâsâ(B °sâḥ) sam̃ ° jâtiko kim̃° B °prabhûtikâ ‖.

12[1]. M °kte te bhikshur bhagantam e° B° bhikshu bha°. — 12[2]. B bhagavantamûlakâ bhagavân dharmabhavanetrikâ bhavantaprabhavâḥ bhagavataḥ prati° M bhavantamû ° n dharmo bhavanetrikâ bhagavan prabhâvaḥ bhagavatâ prati°. — 13. B °she ‖ bhi° M °she ‖ bhikshur bhagavato sam̃mukhâcchru° B °gavantaḥ sam̃mukhâcchru° BM °khân pratigṛihîtvâ pravivekitatvâ(B °tvâyâ) dhâ°. — 14. M evam̃m ukte° B °ktes tân bhikshû° M °bhikshu bha°. — 15. M °daumanasyopâyâso sam̃°.

16. M saced anya° BM °anityam̃ vâ rû°. — 17[1]. M °nitya hi°. — 17[2]. B sâdhû bhikshavaḥ purushasya kha° M °dhu bhikshavo, purushasya khalu punar bhikshavo anitya ° latâm̃ prabhangulatâm̃ viparîṇâ° B °gulatâm̃ vipariṇâ° M °vikâ âyatyâ jâ° BM °ṇiyâ sace°.

गनिरोधतां विदित्वा ये रूपप्रत्यया उत्पद्यन्ति आस्रवा विघाता परिदाघा सज्वरा सांक्लेशिका पौनर्भविका आयत्यां जातिजरामरणीया ते निरुध्यन्ते ॥ सचेत् मन्यथ भिक्षवः वेदना संज्ञा संस्कारा विज्ञानं नित्यं वा अनित्यं वा ॥ अनित्यं हीदं भगवन् ॥ भगवानाह ॥ साधु भिक्षवो विज्ञानस्य खलु पुनर्भिक्षवो अनित्यतां वा दुर्बलतां प्रभंगुणतां विदित्वा ते निरुध्यन्ति व्युपशाम्यन्ति प्रहाणमस्तं गच्छन्ति । तेषां निरोधातो न उत्पद्यन्ति आस्रवा विघाता परिदाघा सज्वराः सांक्लेशिका पौनर्भविका आयत्यां जातिजरामरणीया निरुध्यन्ति । विज्ञानमूलका आस्रवा विघाता परिदाघा सज्वराः सांक्लेशिका पौनर्भविका आयत्यां जातिजरामरणीया विज्ञानजातिका विज्ञानप्रभूतिकाः । तस्मादिह वो भिक्षवो एवं शिक्षितव्यं । यत्किंचिद्रूपं अध्यात्मं वा बहिर्धा वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यद्दूरे अन्तिके वा अतीतानागतप्रत्युत्पन्नं सर्वं रूपं नैतं मम नैषो हमस्मि नैष आत्मेति एवमेव तं यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं ॥ इदमवोचद्भगवां वाराणस्यां विहरन्तो ऋषिवदने मृगदावे इमस्मिंश्च पुनर्व्याकरणे भाष्यमाणे त्रयो भिक्षू बलवशीभावं प्रापुणेन्सुः अशीतीनां च देवकोटीनां विरजा विगतमला धर्मेषु धर्मचक्षूणि विशुद्धानि । आत्तमना ते भिक्षू भगवतो भाषितमभिनन्दे ॥

अथ खलु भगवां आषाढमासस्य उत्तरपक्षे द्वादशीयं पश्चाभक्तः पुरस्तात् संमुखो निषण्णो ध्यर्धपौरुषायां छायायां अनुराधे नक्षत्रे विजये मु[373ᵃ]हूर्ते अनुत्तरं धर्मचक्रं प्रवर्तितं ॥ न खलु पुनर्बुद्धा भगवन्तो सुवर्णमयं वा धर्मचक्रं प्रवर्तेन्ति रूप्यमयं वा मुक्तामयं वा वैडूर्यमयं वा स्फटिकमयं वा मुसारगल्वमयं वा लो-

2. BM °asamjñâ saskâ°. — $4^{2}$. M sâdhû bhikshavaḥ vijñâ° BM °anityam vâ du ° bhamgura(M °la)tâm vi° M °dhyanti teshâm° (*l. suiv.*) B °gacchati | . — 5. M °rodhân nopadyanti || vijñânamûlatâ âçra° B °vighâto paridâhâ samjva° M °çikâ purnarbha ° tyâm jarâ ° ṇîyâ vijñânajâtikâ° (*l.* 9) B °nti | teshâm nirodhân notpadyanti | .

7. B °tyâm jarâ ° bhṛitikâḥ ta° M °bhṛitikâs ta°. — $9^{1}$. B °kshavo atra çi° M °kshavo çi°. — $9^{2}$. M °cid rupam adhyâ° M °ṇîtam va yam dûre ° nnam | sarvam ya naitam mama naisho° B °sho ham asmim naisha âtmeti | e° M °sha ânmâ ti | evam etam ya° M °bhûtam sammya°.

12. M °syâm ṛishipattane mṛi° B °dâve | i° M °smim ca punar vyâ ° bhikshu ha° B °bhikshû cala ° prâpûṇetsuḥ || a° M °prâpûṇetsuḥ açiti° BM °ṭînâm virajo vigatamalam dharme° M °rmacakshur viçuddham B °ddhâni â°. — 15. M âttamano tehi bhikshur

16. BM °vâm âkhâḍha° M° paççâdbhaktaḥ° B °stân sammu° M °sharṇṇo adhya ° cchâyâyâm anurâḍhe nakshu ° ye muhurtta anutta°. — 19. M °punaḥ bu ° gavamto su° BM° rmacakram(B °kra) pravarttanti rû° B °vâ sphâṭi° M °kamayam vâ asogalva ° hitikâmayam vâ liḍikâmayam vâ tâmramayam vâ dânumayam vâ mṛi°.

हिंतिकामयं वा रीतिकामयं वा ताम्रमयं वा लोहमयं वा शैलमयं वा दारुमयं वा मृत्तिकामयं वा। अथ खल्विमान्येव चत्वार्यार्यसत्यानि त्रिपरिवर्तं द्वादशाकारं धर्मचक्रं ॥ प्रवर्तिते प्रथमं धर्मचक्रप्रवर्तनसूत्रे आयुष्मतो आज्ञातकौण्डिन्यस्य विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं अष्टादशानां देवकोटीनां च। इयं च महापृथिवी अतिरिव षड्विकारं कम्पे प्रकम्पे संप्रकम्पे वेधे प्रवेधे संप्रवेधे दक्षिणतो अभिध्यायति वामतो पि अभिध्यायति वामदक्षिणतो पि अभिध्यायति संहर्षणीयं च कम्पयति दर्शनीयं च कम्पयति तोषणीयं च कम्पयति प्रेमणीयं च प्रह्लादनीयं च निर्वापनीयं च उल्लोकनीयं चासेचनकं चाप्रतिकूलं च प्रासादिकं च प्रसदनीयं च निरुद्वेगं च निरुत्त्रासं च कम्पति कम्पमाना च पुनर्महापृथिवी न कंचित्सत्वं व्याबाधति यदिदं त्रसं वा स्थावरं वा भगवतोऽनुभावेनाप्रमेयं च लोके ओभा समभूषि अतिक्रम्य देवानां देवानुभावं नागानां नागानुभावं यक्षाणां यक्षानुभावं। या पि ता लोकान्तरिका अन्धकारार्पिता वा तमसा तमसार्पिता अघा असंभूता असंभूतपूर्वा यत्रेमे चन्द्रमसूर्या एवं महर्द्धिका महानुभावा आभाये आभां नाभिसंभुणन्ति आलोकेन वालोकं न स्फुरन्ति ता पि तेनावभासेन स्फुटा अभून्सुः। ये पि तत्र सत्वा उपपन्ना ते प्यन्यमन्यं संजानेन्सुः अन्ये पि किल भो इह सत्वा उपपन्ना अन्ये पि किल भो इह सत्वा उपपन्ना एकान्तसुखसमर्पिता च पुनस्तत्क्षणं तत्मुहूर्तं सर्वसत्वा अभून्सुः ये पि चावीचिस्मिं महानरके उपपन्नाः ॥

भगवां धर्मचक्रं प्रवर्तेन्तो एकषष्टिं त्रिसाहस्रमहासाहस्रलोकधातुं भाषमाण-

2. M °khalvîmâny evam̃ catvâ° BM °kram̃ pra°. — 3. BM °rttitena pratha° M °mam̃ dharmacakram̃ pravarttanasutre°. — 4. M imam̃ ca mahâ° BM °ḍvikâlam̃ kampe pra-(M °prakam̃pe sapra)kampe vedhe sam̃vedhe sam̃pravedhe sarvato adhivyâyati vâmato pi abhidhyâyati(B °pi adhivyâyati | ) vâmadakshiṇato pi abhidhyâ(B °dhyî)yati sam̃harsha° M °toshaṇiyam̃ ca kam̃payati | preshaṇiyam̃ prahlâdaçiyam̃ nirvâ° B °preshaṇiyam̃ ca prahlâ° M °llokaniyam̃ ca asecanakam̃ câpratikulam̃° B °dikam̃ ca prasaniyam̃ ca niru° M °sadanipam̃ ca nirudvetam̃ ca nirudrâsam̃ ca kam̃pati kampamânâ ca || pu° BC °tvam̃ vyâvahati | yad i° B °sthâca vâ bha° M °gavato anubhâve° BM °shi | ati° B °mya devânâm̃ vânubhâvam̃ nâgânubhâvam̃ yakshâṇâm̃° M °kshâṇâm̃ yakshâ°.

12. BM °ndhakâro(M °lo)pitan vâ(M °tam̃ vâ) tamasâ tamasâyitatvâ aghâ(M °gho) aghâ(M °gho) asam̃bhûtâ asam̃bhûtapûrvâ | yatre(M °tra)me candra° B °sûryo e° M °rddhikâ evam̃ mahânu° BM °ye âbhâ râ(M °bhâṇâ)bhiçabhu° M °ṇanti | âlokena vâ âlokam̃ na sphulanti tâm̃ pi tenâbhâsena sphuṭâm̃ abhûnsuḥ | B °nsuḥ ye°. 15. M °tra satvâ upapannâḥ te° BM °sam̃jânetsuḥ anye pi kila bho iha satvâ upapannâ anye(M °nnâḥ a)pi kila bho iha satvâ upapanno(M °nnâḥ) e° B °nsuḥ | ye° M °ye pi vâvîcismim̃° B °vîcismim̃ ° upapannaḥ || .

18. M atha bhagavân dharmacakrapravarttanto° B °pravarttanto° BM °shashṭhim̃ tri° M °hâsâhasrolo° BM °dhâtum̃ bhâshâ(M °bhâvâ)mâṇam̃ svare(M °ra)ṇâbhivijñâpe(M °jñâye)ti | tato ° ṇi ye°.

स्वरेणाभिविज्ञापेति ततो च परेण बुद्धक्षेत्राणि । ये च तस्मिं समये बुद्धा भगवन्तो तेषां तेषां च परलोकधातुषु परिषदि धर्मं देशेन्ति ते भगवतो धर्मचक्रं प्रवर्तेन्तस्य तूष्णी अभून्सुः ॥ दुःप्रसहो सम्यक्संबुद्धो परिषदि धर्मं देशयति । भगवां दुःप्रस[373b]हो तूष्णीं अभूषि बुद्धघोषो च निश्चरति । विस्मिता परिषा भगवन्तं दुष्प्रसहं पृच्छति ॥ भगवं बुद्धघोषो निश्चरति । तस्मिं निश्चरन्ते तूष्णी अभूलोकनाथो दुष्प्रसहो विस्मिता परिषत्कलविंकमंजुघोषो मेघस्तनितदुन्दुभिस्वराभिगमो निश्चरति बुद्धघोषो न जल्पति वादीनां प्रवरो भगवान् ॥ दुष्प्रसहो आह ॥

लोकधातु महानाम तत्र शाक्यमुनिर्जिनः ।
धर्मचक्रं प्रवर्तेति यस्य घोषो निश्चरति ॥
लोकधातुसहस्राणि असंख्येयानि घोषये ।
श्रूयति स्वरबुद्धिस्य यथा दूरे च सन्तिके ॥
एवं महानुभावो यं परिपूर्णमनोरथो ।
संविभागं प्रवर्तेति संबुद्धो बोधियर्थिनां ति ॥

येन स्वरेण समन्वागतस्तथागतो र्हं सम्यक्संबुद्धो वाराणस्यां ऋषिवदने मृगदावे त्रिपरिवर्तं द्वादशाकारं अनुत्तरं धर्मचक्रं प्रवर्तयति सो स्वरो षष्टिभिराकारैः समन्वागतः । कतमैः षष्टिभिः । गम्भीरश्च तथागतस्वरो भीमरूपश्च आज्ञेयश्च हृद-

1. M °ddhâ bhagavantaḥ teshâṁ câvalokalokadhâtushu pariyadi dharmeṁ deçenti || taṁ bha° B °kraṁ pravarttetasya° M °sya bhûshṇi abhûtsuḥ B °nsuḥ duḥ°. — 3¹. M dushprasaho saṁmya°. — 3². M °gavân dushprasaho tûshṇîm abhû° B °shi | bu° BM °ti yi°. — 4. B °ti bha°. — 5¹. M °gava bu°. — 5². BM tasmiṁ niçcarate maharshiṇâ (M °ṇâṁ) dharma(M °rmma)cakraṁ vâcâ tû° B °llokanâthe du° M °shprasaha vismito pa° BM °riparshat kala(M °t kara)viṁ° M °mañjughoshastanitadundubhisvaro vigamo ° B °meghastarita° M °ddhaghoshena ja° B °lpati vâdinâṁ°.

8. M °hâmâma°. — 9. BM °pravarttati°. — 10. M °dhâtûsa ° asaṁkhyayâ° BM °shayo | .

11. B çruyati° M çruyate va° B °ddhiya yathâ°. — 12. B °norathâ | M °norathâ. — 13. BM dvipada(M °daṁ)çreshṭo saṁvi ° pravarttenti saṁbuddho(M °ddhaḥ) bodhirnâ(M °dhinâ)rthinâ iti | (M °ti) ye°. — 14. B °reṇa samanvâgatâs ta° M °s tagato 'rha samya° B °rhaṁ saṁmya° M °shipattane mṛi ° trishparivartta dvâ° BM °kâraṁ a(M °raṁ a)nuttaradharma ° rttayasi(M °si |) so° M °shashṭhibhi ° gato B °gataḥ ka°.

16¹. M °shashṭhibhiḥ B °bhiḥ ga°. — 16². M gambhîrasya tathâgatasvaro° BM °bhima(M °mma)rûpaçca âjñayaçca hṛi ° premaṇiyaçca ase(B °sa)canîkaçca(M °kasya) aprativaṇi ° draçca apabhâ(B °padbhâ)raçca akalmâ(M °lyâ)shaçca rathanemigho(B °nenirgho)shaçca meghastani(B °stari)tameghagarjita(M °rjjitasvarçca satya)svaraçca vâtavṛishṭi(B °shṭhi)stani° M °rjjitasvaraçca indrasvaraçca de ° hmasvaraçca anukulasvaraçca dushṭasvaraçca

यंगमस्य प्रेमणीयस्य असेचनकस्य अप्रतिवाणीयस्य विस्पष्टस्य अप्रतिकूलस्य अवर्णस्य अच्छिद्रस्य अप्राग्भारस्य अकर्कशस्य रथनेमिघोषस्य मेघस्तनितमेघगर्जितस्वरस्य वातवृष्टिस्तनितसमगर्जितस्वरस्य देवस्वरस्य ब्रह्मस्वरस्य अनुकूलस्वरस्य अदुष्टस्वरस्य अमूढस्वरस्य अनुत्सन्नस्य अनुत्सदस्य अक्षुभितस्य सर्वस्वरस्य सत्यस्वरस्य श्रीमत्स्वरस्य पुंगवस्वरस्य सिंहस्वरस्य नागस्वरस्य वृषभस्वरस्य आजानेयस्वरस्य क्रौञ्चस्वरस्य कलविंकस्वरस्य [illegible]लस्वरस्य सर्वस्वरस्य मंजुस्वरस्य विज्ञानस्वरस्य अक्षरसंपन्नस्य विज्ञानसंपन्नस्य मृदुसंपन्नस्य विस्तारसंपन्नस्य कुशलजातसंपन्नस्य सत्यविस्तरसंपन्नस्य कुशलमूलजातसंपन्नस्य सुस्वरसम्पन्नस्य हर्षणीयसंपन्नस्य तन्त्रीस्वरस्य गीतस्वरस्य वादितस्वरस्य कुम्भस्वरस्य पुष्पस्वरस्य अतिस्वरस्य दुन्दुभिस्वरस्य अनुत्तरस्वरस्य तथागतस्वरः ॥ सर्वदिशां पुनस्तथागतस्वरः स्फुरति न कर्हिचित्प्रतिहन्यते । येन स्वरेण समन्वागतः तथागतो अर्हन्सम्यक्संबुद्धो वाराणस्यां ऋषिवदने [374ᵃ] मृगदावे त्रिपरिवर्तं द्वादशाकारं धर्मचक्रं प्रवर्तेति सो स्वरो एभिः षष्टिभिः आकारैः समन्वागतः ॥

अथ खलु महाब्रह्मा तायं वेलायं भगवन्तं संमुखाभिः सारूप्यगाथाभिरभिस्तवे ॥

सत्वसारवराग्रेण इक्ष्वाकुकुलसंभवे ।
धर्मचक्रं प्रवर्तेन्तेन मेदिनी संप्रकम्पिता ॥
उत्पाता च नाम भीष्मा अशीतिं समपद्यथ ।
धर्मचक्रस्य तेजेन अशीतिं पुनर्भूमिजा ॥
ओघपुष्पविचित्रांगा उत्पतन्ति वलाहका ।
काशीहितकरं नाथं ओकिरेन्सुर्नरोत्तमं ॥

anûḍhasvaraçca anutsaṁnaçca anutsa° B °daçca | akshu° BM °tsvaraçca puṁgavatsva-(M °puṅgavasva)raçca siṁ ° âjâneyasvaraçca krauñca(M °kromca)svaraçca (B °çca |) kala(M °kara)viṁ° M °ksharasaṁpannâçca vijñâsampannaçca mṛi ° stârasaṁpannaçca kuçalajâtasampannaçca satyavistarasampannaçca satyakuçalamûlajâtasampannaçca su ° rshaṇîyasvarasaṁpannaçca tantrî ° mbhasvaraçca kumbhasvaraçca pu ° ndubhisvaraç cânutta ° thâgatasvaraçca | .

10¹. M sarvâ di ° svaro sphuṭati na°. — 10². B °thâgatâ arha° M °to 'rhanta saṁmya° B °syâṁ rishi° M °syâṁm ṛishipattane mṛi ° trishpari ° rtteni so ° ebhir shashṭhibhir âkâ° BM °gatâḥ ‖ .

14. M °vanta saṁ° BM °mukhaṁ ebhiḥ sâ(B °so)rû°. — 15. B °ve dha°.

16. M °cakrapra° BM °varttante° B °mpitâ u°. — 17. BM °ca name bhî ° çîtiṁ samavadyatha | . — 18. B °bhûmi o° M °mijaṁ | . — 19. B oghâ pu° M °citrâṅgâ utpadyanti varâhakâ | . — 20. BM anekapushpavicitrâṁgâ me(M °shpacitrâṅgâ ma)ghâ kusumasaṁcayâ kâçî(M °çi)hi° M °nâthâ okiratsu naro° B °retsur na°.

गजा इव प्रमुक्तांगी उत्पतन्ति बलाहका ।
हेमकंबुधरा भीमा मेघा कुसुमसंचया ॥
श्रुत्वान नरसिंहस्य धर्मकायमुपस्थितं ।
सनत्कुमारो चिन्तेति संस्तवामि तथागतं ॥
सो च भूतेन वर्णेन प्रभाये सुविजानितं ।
संस्तवे गगने स्थाने ब्रह्मा सर्वार्थदर्शिनं ॥
बुद्धसागरपर्यन्तां निषण्णो रत्नावतीं ।
कंपेति यो त्रिसाहस्रां वजिरं क्षिपसि गौतम ॥
आलोकमात्रसंविग्ना द्विधा दश समन्ततो ।
त्वया आयुधश्रेष्ठस्मिं क्षिप्तस्मिं पुरुषोत्तमं ॥
उत्क्षिपयन्तो विपर्यासा दृष्टिगहननिश्रितां ।
नागराजो नरेन्द्राग्रो राजे सिंहगतिर्जिनः ॥
सिंहो यथा असन्त्रस्तो पर्वतान्तरनिश्रितो ।
त्रासयन्तो अरीं सर्वां राजे सिंहगतिर्जिनः ॥
मारपक्षं अभ्याहत्यं मारसेनाग्रसूदन ।
दक्षिणेन च व्यूहन्तो उच्छ्रयेसि जिनध्वजं ॥
महारतननिर्घोषा कंपते सा न सीदति ।
स्वरेण वदतोत्थाप्यानुस्मृता वसुन्धरा ॥
हेमकाञ्चनवर्णाभं धातुमुत्तममुत्तमाः ।
मुनिं समन्ता अभिकिरेन्सुः मेरुगगणमाश्रिताः ॥

1. M °ktâm̃gi u° B °gi valâ° M °varâhakâ ‖ . — 2. B °dharâ hîmâ meshâ ku° M °mâ maghâ°. — 3. B çrutvâ nara° BM °kâyam u° M °pasam̃sthitum̃ | . — 4. B satku° M °cintayati sam̃stathâ°. — 5. BM sâ ca bhû° M °rṇṇena ye jâya suvijânitum̃° B °rṇena yayâye suvijâyitum̃ | .

6. M °ve gagaṇe sthâ° BM °rçinâm̃ | . — 7. BM °paryantam̃ nisharṇṇam̃ ra°. — 8. BM kam̃pate yo ° hasrâm vâ jana(M °srâm̃ jinam̃) kshipasi(M °pati) gauttamam̃ | . — 9. BM âloke mâ ° vidvân di(M °dvâm̃ di)çâ° M °ntataḥ | . — 10. BM tâye âyu° B °çreshṭasmim̃ kshi° M °çreshṭismim̃ kshiptosmim̃ pu ° ttamaḥ | B °ttamam̃ | .

11. M utkshiptayanto° BM °shṭigrahaṇani(M °ṇami)çri°. — 12. B nâga nâga na° M nâgarâjâ narendrâge râjâ sim̃havatâ ji° B °ndrâgreḥ râjos sim̃havatâ ji°. — 13. M *omet cette ligne.* — 14. M sim̃ho yanto a° BM °arim̃ sarvâm̃ gaja sim̃hevatâ ji°. — 15. BM °pakshe(M °ksho) avyuhatyam̃ mâ ° sûdanam̃ da°.

16. BM °ṇena ca vyû° M °vyûhatvam̃ ucchrayasi jinam̃ dhvajam̃ | . — 17. M °rata-nirghosho kam̃pate so na sî° B °nighosho kam̃°. — 18. BM °datottadyânusmṛi(B °sṛi)tâ ca va°. — 19. B °dhâtum̃ niccanam uccamaḥ | M °tum uccam avamatha. — 20. B °samântâ abhikiretsuḥ me° M °ntâ 'bhikimetsuḥ merum̃gagaṇa sam̃sthitâ | .

प्रसन्नचित्तो सुमनो प्रांजलिप्रणतेन्द्रियः ।
धर्मचक्रं अहं श्रुत्वा तेन अस्मि इहागतो ॥

भगवता प्रथमे धर्मचक्रप्रवर्तनसूत्रे आज्ञातकौण्डिन्यः अष्टादशा च देवकोटीयो विनीता ते देवा देवभवनेषु आरोचेन्ता स्वकस्वकानि भवनानि गच्छन्ति ॥

सर्वे अशरणा त्वान्धा अधितप्ता महद्भया ।
अनिःसृता असारा च इति भाषति गौतमो ॥
अलं भवां प्रसादाय . . . तत्वार्थदर्शिमां ।
बुद्धं वेरभयातीतं अभिक्रमथ वन्दनां ॥

त्रिंशद्देवताकोटीयो ऋषिवदनमागता । ते द्वितीये धर्मचक्रप्रवर्तनसूत्रे भाष्यमाणे विनीतास्ते पि भवनेषु रोचेन्ता स्वक[374b]स्वकानि भवनानि गच्छन्ति । तेषां श्रुत्वा पंचाशद्देवताकोटीयो आगताः ते पि भगवता तृतीये धर्मचक्रप्रवर्तनसूत्रे विनीतास्ते पि देवभवनेषु आरोचेन्ता स्वकस्वकानि भवनानि गच्छन्ति । तेषां श्रुत्वा अशीति देवताकोटीयो आगता ते पि भगवता चतुर्थे धर्मचक्रप्रवर्तनसूत्रे विनीतास्ते पि देवभवनेषु आरोचेन्ता स्वकस्वकानि भवनानि गच्छन्ति ॥

अथ खलु शिखरधरो नाम तुषितकायिको देवपुत्रो भगवन्तं ऋषिवदनं गतं संमुखाभिर्गाथाभिरभिस्तवे ॥

सगारवो सप्रतीसो ब्रह्मा कृत्वानमंजलिं ॥
साधु ते साधुरूपस्य व्यामप्रभा प्रतिपद्यते ।
साधु अर्थान्वितं साध्यं वचनं ते मनोरमं ॥

1. BM °cittâ su° M °jalim̃ praṇatendriyâḥ | B °jalim̃ pramudendriyaḥ dha°. — 2. M °cakram aham̃° BM °tenâsma i°. — 3. M °dharmam̃ pravarttanam̃ sutram̃ | âjnâ° B °tre | âjñâ° M °ṇḍinyo a ° nîtâḥ te°.

6. M anisṛitâ | asâ ° bhâshita gautamo B °gauttamo | . — 7. M lam̃ bha° B °pramadâya tatvâ° M °dâya satvâ° B °mâm̃ bu°. — 8. M buddhavai° BM °kramam̃(B °mam̃ |) mama vandatâm̃ trim̃°. — 9[1]. M °shipattanam âgatâḥ | B °gatâ te°. — 9[2] B °rmadhakra° M °cakram̃pravarttanasutre ° pi bhagavaneshu rocyantâ svaka°.

11. B °çrutvâ açî° (*l.* 13) M °tîyadha ° rttanasutram̃ | vi°. — 13. M °âgatâḥ te°.

16. M °shipattanam̃° B °mukham̃ âbhir gâ°. — 18. B agâravo prati° M agauravo sapratîço bra° BM °lim̃ sâ°. — 19. B sâdhû te sâdhurûpasya vyoma prati° M °sya vyonam̃ pratima cyutam̃ B °dyate sâ°. — 20. BM °dhur arthâ(M °rtho)nvitam̃° B °sâdhya va° M °canan te ma°.

साधु अरतिसंयोजः सर्वसन्धिगुणान्वितः ।
साधु चत्वारि सत्यानि सत्यं प्रवदसे मुने ॥
साधु ते देवगन्धर्वा पिबन्ति मधुरां गिरां ।
साधु अप्रतिमं चक्रं प्रवर्तेसि अप्रवर्तियं ॥
तुह्यं लोके समो नास्ति रूपे वर्णे कुले तथा ।
ईर्यापथे च वीर्ये च ध्याने ज्ञाने तथैव च ॥
अथ अष्टादशा वीर कोटीयो प्रथमे फले ।
विनीता देवपुत्राणां आसने प्रथमे मुनि ॥
त्रिंशच्च कोटीयो पुनर्विनीता प्रथमे फले ।
द्वितीय आसने वीर देवपुत्राण मारिष ॥
पंचाश कोटीयो भूयो आसने तृतीये पुनः ।
विनीता देवपुत्राणां अपायेषु विमोचिता ॥
अशीति कोटीयो भूयो श्रोतापत्तिफले विभु ।
चतुर्थे आसने नीता दुर्गतीषु विमोचिता ॥
तस्मात्ते सदृशो नास्ति मैत्र्याय पुरुषोत्तम ।
करुणाय च कारुणिको अकुतोभय नरर्षभ ॥
दिष्ट्या पुरुषशार्दूल उत्पन्नो लोकसुन्दरो ।
हिताय सर्वसत्वानां चिरन्तिष्ठ महामुने ॥
अचिरस्य राजसुत उत्पन्नो सि नरर्षभ ।
प्रणेता विप्रणष्टानां अन्धानां नयनं ददा ॥
नास्मासु कदाचिद्भूत्वा गुरुरन्तरहायतु ।

1. BM °arasaṁ° M °yogaṁ sarvesa° B °taḥ sâ°. — 2. M °muniṁ | . — 4. M sâyu aprati° BM °kraṁ pravarttasi a(M °rttasyâ)pra°.

6. B iryâ° M iryyâ°. — 7. B °ashṭâṁdaçâṁ dhiro ko° M °viro ko° B °phalaṁ | . — 8. B °âçane° BM °muniḥ | . — 9. M triṁçau koṭiyo punaḥ vinî°. — 10. M °putreṇa mârishaḥ | .

11. B °koṭiyo bhû° M °bhûyaḥ âsa° punar vinî°. — 12. B °trânâṁ a° M °ṇâṁ âsane prathame muniḥ | triṁçacca koṭiyo punah vinîtâ prathame phale | vinîtâ devaputrâṇâṁ apâ ° mocitâḥ | . — 13. B ° koṭiyo bhû° M °bhûyaḥ çrotâ° BM °vibhûḥ | . — 15. BM °shottamaḥ | .

16. BM °ṇika a° M °rshabhaḥ | B °rshabhâ dṛi°. — 17. BM dṛishṭvâ pu° M °rdûra u° B °tpannâ loke su°. — 18. B °tishṭhan mahâ°. — 19. M °sya mahâsûtâ u° B °suto u° M °si vararshabhaḥ | B °rshabho | . — 20. M °ṇetâ niprana ° andhyânâṁ na ° dada || .

21. B nâmâsu° M nânâsu ° bhupaguruṇântârahâyituṁ | B °bhûta guruṇâ nâtho antarahâ°.

अपर्यन्तं तव स्थानं भवतु लोकनायक ॥
अपाया तत्रान्तीभूता स्वयंभू तव तेजसा ।
निराकाशो कृतो स्वर्गो त्वां प्राप्य पुरुषोत्तम ॥
यो मिथ्यत्वनियतो राशि पुरुषपुंगवोत्तम ।
एष अनियतं राशिं त्वां प्राप्य पूरयिष्यति ॥
यस्माप्यनियतो राशि त्वां प्राप्य सुरवन्दित ।
पूरयिष्यति सम्यक्त्वराशिं राजकुलोदित ॥
अद्भुतानां च धर्माणां विवृद्धिरुपलभ्यते ।
त्वां प्राप्य पुरुषादित्यं तमोन्तकरमच्युतं ॥
तस्य ते भाषमाणस्य भूतां धर्मा जनप्रिय ।
अभिनन्दति ते वाक्यं सेन्द्रो लोको महामुने ॥
इति स्तुवन्ति देवगणा वरदं प्रीतिमानसं ।
अनन्तगुण[375a]संपन्नं सार्थवाहनरोत्तममिति ॥

भिक्षू भगवन्तमाहंसु: ॥ कस्य भगवन् कर्मस्य विपाकेन आयुष्मता आज्ञातकौण्डिन्येन सर्वप्रथमं धर्मं आज्ञातं ॥ भगवानाह ॥ एतस्यैवैष भिक्षवः पूर्वप्रणिधानं ॥ भूतपूर्वं भिक्षवो अतीतमध्वानं राजगृहे नगरे कुम्भकारशालायां प्रत्येकबुद्धेन पित्तव्याधिकेन प्रतिश्रयो याचितो । सो तेन कुम्भकारेण उपस्थितो च पित्ताबाधातो मोचितो ॥ तेन दानि प्रत्येकबुद्धेन ये परिचारिता प्रत्येकबुद्धा ते तहिं भार्गवशालां तस्य प्रत्येकबुद्धस्य पित्तव्याधिकस्य क्षेमणीयपृच्छा आगता ॥ भार्गवो प्रत्येकबुद्धं ततो पित्ताबाधातो मोचेत्वा पृच्छति । केन वो प्रथमं धर्मं आज्ञातं ॥

1. BM aparya(M °ryya)ntâ tava sthâtuṁ bhavaṁtu(M °vatuṁ) lokanâyakaḥ | . — 2. B °tatra kibhû° M °tatra kiṁbhû°. — 3. M °rgo kṛitvâ prâ ° ttamaḥ | . — 4. BM yato râçi(M °si) puru° M °shapuṅgavapurushottamaḥ B °puṁgava e°. — 5. M esho anipârâsî | tvaṁ prâpya pûramishyanti | B °yato râçi tvaṁ prâpya purayi°.

6. M °vanditaḥ | B °vanditaḥ pû°. — 7. M purayishyanti samyaktu(?)râçi yato râja° B °ti saṁmyaktva(*ou* °ptka)niyato râçi râja° BM °ditaḥ |°. — 8. B °nâṁ ya dha ° vṛiddha rùpa°. — 10. B °dharmajinapriyaḥ | M °dharmâ janapriyaḥ.

11. M °sendrâ loka ma° B °loka ma°. — 12. M °pritimana°. — 13. M °ṇasampannaṁ ° vâhaṁ naro ° ti || karma° (*l.* 14). — 14². M °dharma â° B °rmaṁ âjñâto || . — 15². M eshasyai°.

16. M °vo nati ° tyekaṁ bu ° ttavyâṁdhitena° B °vyâdhitena° M °tiçreyo yâcitaḥ B °cito so°. — 17. M °kâlena u° B °sthite ca pi° M °to va pi°. — 18. B te dâ ° ye parivâritâ° M °çâlâyaṁ tasya pra° B °dhikasya kshamaṇî° M °kshemaṁṇî° BM °gatâ bhâ°. — 19. M °vo taṁ pra° B °cchati ke°. — 20. BM kena vâ pra° M °thamaṁ âjñâtaṁ || .

सो प्रत्येकबुद्धो आह ॥ मया सर्वप्रथमं धर्मो आज्ञातो पश्चादेतेहि ॥ सो दाणि मार्गवो प्रणिधानमुत्पादेति । यं मया कुशलमूलमुपचितं तव उपसंस्थानपरिचर्यां कृत्वा तेन कुशलमूलेन अहमपि सर्वप्रथमं बुद्धस्य भगवतो धर्मं देशितमाजानेयं । न च लाभसत्कारं स्पृहयेयं प्रान्तानि च शय्यासनानि स्पृहयेयं इतरेतरेण च पिण्डपात्रेण सन्तुष्टो भवेयं गिर्करेषु च वनखण्डेषु एकस्य मृतभूतस्य शरीरनिक्षेपणं भवेय ॥ भगवानाह ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन राजगृहे नगरे मार्गवो अभूषि न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष स भिक्षवः आज्ञातकौण्डिन्यस्थविरस्तेन कालेन तेन समयेन राजगृहे मार्गवो अभूषि । यं से तस्य प्रत्येकबुद्धस्य पित्ताबाधिकस्य प्रतिश्रयं दिन्नं च पारिचर्या कृता प्रणिधानं च उत्पादितं यथा तव सर्वप्रथमं धर्मो आज्ञातो पश्चादन्येहि एवमहं पि सर्वप्रथमं बुद्धस्य भगवतो धर्मं देशितमाजानेयं तस्य कर्मस्य विपाकेन तेनाज्ञातकौण्डिन्येन सर्वप्रथमं धर्मं आज्ञातं पश्चादन्येहि ॥

यं कुशलमूलमुपचितमशनवसनभक्ष्यपारिचरियाये ।
तेन कुशलमूलेन पुरुषवरसमागमो भवतु ॥
यथा त्वया सर्वप्रथमं धर्मो आज्ञातो पश्चान्येहि ।
एवमहं सर्वप्रथमं देशितमाजानेयं जिनस्य ॥
अल्पेच्छः संतु[$375^{b}$]ष्टः इतरेतरपिण्डकेन यापेन्तो ।
प्रशमसुखबृंहितमनो न लाभसत्कारं स्पृहयेयं ॥
प्रान्तारण्य मृगयूथपर्यटिता पर्वतानि . . . . . ।
तत्र मम निधनसमये शरीरनिक्षेपणो भवेया ॥

1[2]. B °sarva dha° M °jñâtam̃ pa°. — 1[3]. M °rgato pra° B °rgavâ pra° M °dhânam̃ 'utpâdesi | . — 2. M °tava upasthâ ° tena çalamû ° pi pratha ° dharma deçitam̃ âjâ°. — 4. BM °treṇa sa(M °sam̃)tushṭo° B °veyam̃ | nijhare° BM °mṛigabhû ° bhûteshu ça°.

6[2]. M °shmâkamm e ° d anya sa tena kâ° B °lvevam̃°. — 7. M °hetor esha°. — 8. M °kshavo â ° ṇḍinyo sthaviro tena kâ°. — 9. M °dhitasya pratiçrayena dinnena pâricaryâ prakṛi° B °çrayeṇa dinnena ca pâricaryâ kṛi° BM °thâ tava sarveprathamam̃ (M °me) dharmo° M °ham̃ pi sarve prathamam̃ bu ° çito âjâneyâ tasya karma° B °jâneya tasya karma° M °te jñâtakau ° nyena sarve pra° B °nyena sarvam̃ pra°.

13. BM yam̃ mayâ ku° M °pavitam̃ aça° B °citam̃ aça° M °bhakshaparirariyâye B °kshyaparicariyo | ye te°. — 14. BM °shavarapurushasa° B °tu ya°. — 15. BM yathâ ca tva° M °sarve pra° BM °paççâd anye°.

16. BM °sarvam̃ pra° B °thamam̃ dharmam̃ de° BM °nasya a°. — 17. B alpacchaḥ M alpeccho santushṭo itaretareṇa pi° B °itaretareṇa pi° M °kena jâyanto B °nto pra°. — 18. M °sukhasukhâḥ vṛim̃° BM °mano lâ° B °yeyam̃ prâ°. — 19. BM °yûthavighaṭṭi-(M °ghaṭi)tâni parvatâni(B °rvatâni |) tatra°. — 20. B °kshepaço bha° BM °yâ sa°.

सत्कृत असत्कृता वा आयुर्विज्ञानं उष्मगता च ।
कस्य जनेति प्रीतिर्धरणिरजसमे मृतशरीरे ॥

आज्ञातकौण्डिन्यस्य जातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः ॥ भगवता आत्मपरित्यागानि कृत्वा पुत्रपरित्यागानि कृत्वा दारापरित्यागानि कृत्वा अर्थपरित्यागानि कृत्वा राज्यपरित्यागानि च कृत्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धित्वा आयुष्मानाज्ञातकौण्डिन्यः महता अर्थेन संयोजितः ॥ भगवानाह ॥ न भिक्षव एतरहिमेव मया एष आज्ञातकौण्डिन्यो महता अर्थेन संयोजितो । अन्यदापि एषो मया आत्मत्यागं कृत्वा महता अर्थेन संयोजितः ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं अतीतमध्वाने कोशलराजा अभूषि कृतपुण्यो महेशाख्यो महाबलो महाकोशो महावाहनो । तस्य च राज्यं ऋद्धं अभूषि स्फीतो च क्षेमो च सुभिक्षो च आकीर्णजनमनुष्यो च सुखितमनुष्यो च प्रशान्तदण्डडिम्बडमरः सुनिगृहीततस्करो व्यवहारसंपन्नो धर्मेण परिपालियन्तो । तस्य च राज्ञो देशे देशे कल्याणकीर्तिशब्दश्लोको दायकदानपतिसत्कृतः परानुग्रहप्रवृत्तो परलोकदर्शी ॥ तस्य धार्मिको ति कृत्वा अपरलोकदर्शी काशिराजा तस्य तं कोशलराज्यं अतिक्रामितुकामो चतुरंगं बलकायं संनाहयित्वा हस्तिकायमश्वकायं रथकायं पत्तिकायं तं कोशलविषयं आगतो ॥ तस्य कोशलराजस्य अमात्येहि भटबलाग्रेण च काशि-

1. B satkritamaskritâ vâ â° M satkritam asatkritâ vâ â° BM °jñâna ushmagatâ(M °gato) ca ka°. — 2. M °netrî prîtim̃ dharaṇim̃ raja° B °prîtim̃ dharaṇira°. — 3. M iti çrîmahâvastuavadâne âjñâ°. — 4[1]. M atha bhikshur bhaga° B °nsuḥ bha°. — 4[2]. B °gavato âtma° M °traparityâgâni ca kṛitvâ dâraparityâgâni ca kṛitvâ arthaparityâgâni ca kṛitvâ râjya ° ttarâ sam̃mya ° yushmatân âjñâ ° ṇḍinyo ma°.

7[1]. M °vânân âha | . — 7[2]. M °kshavo etarahim̃ evam̃ mayâ° B °etarahim̃m e° BM °jitâ | . — 8. M °jito || . — 9[1]. BM bhikshu â°. — 9[4]. BM °vo bhû°.

11. M °rvam̃ bhikshavo atî ° çalo nâma râjâ° BM °no ta°. — 12. M °ṛiddham̃ sphîṭam̃ yâbhûshi ca kshe ° bhiko ca akîrṇṇajanamanushyo bahujanamanushyâ ca sukhitajanamanushyo ca pra° B °rṇṇajanamanushyo ca sushitamanushyo ca pra ° mbabhramaraḥ° M °mbaḍamara sunigṛi ° skara vya° B °hârasam̃sam̃panna dha° M °ṇa ca pa° BM °pârayanto ta°. — 14. M °jño deçe deçe deçe kalyâ ° tkṛito parâ° BM °rçî ta°. — 15. M °rmiketi kṛi° BM °lokadarçi kâçi ° krâmatukâmo(M °maḥ) caturam̃gabala(B °ram̃gam̃vara)-kâyam̃ sam̃nâ(M °samnâ)hayi° B °gato ta°.

18. BM °bhaṭṭaba° M °greṇa so kâçirâjâ bha° B °ekâçye(?)na palânâ sarvo° M °palâsavâm̃ ba° BM °gro abhinno so°.

राज्ञो भग्नो एकांशेन पलानो सर्वो बलाग्रो भिन्नो ॥ सो अपरकालेन भूयो चतुरंगेन बलकायेन आगतो पुनरपि भग्नो गतो ॥ एवं सो काशिराजा पुनर्पुनश्चतुरंगेन बलकायेन तं कोशलविषयं आगच्छति ॥ तत्र बहूनि प्राणिसहस्राणि उभयतो अन्यमन्यस्य असिशरशक्तितोमराणि काये उपनि[376ª]पातेन्ता अनयव्यसनमापद्यन्ति ॥ तस्य कोशलराज्ञो धार्मिकस्य सकृपस्य परलोकदर्शिस्य तानि प्राणसहस्राणि अनयव्यसनमापद्यन्तानि दृष्ट्वा चित्तस्य संवेगमुत्पन्नं अधिगतं राज्यं राज्यलोभेन जननिधनं इमं एवरूपं अधर्मं क्रियति ॥ सो संविग्नो तं राज्यं उज्झित्वा एक अद्वितीयो अज्ञातवेशेन दक्षिणापथं गच्छति तत्र येन केनचिद् व्यवहारेण आत्मनो वृत्तिं कल्पयिष्यामि ॥

सो दानि गच्छन्तो अध्वानकिलांतो वातातपसंतप्तो न्यग्रोधस्य हेठा शीतलायां छायायां विश्रमन्तो आसति अपरो च समुद्रयात्रिको सार्थवाहो विपन्नयानपात्रो सर्वेण अर्थेन समुद्रे विनष्टेन दक्षिणातो समुद्रातो कोशलं आगच्छति ॥ शृणोति कोशलराजा धार्मिको सकृपो च परानुग्रहप्रवृत्तो च बहूनि प्राणसहस्राणि पतन्तानि धनक्षीणानभ्युद्धरति अर्थमात्राये परिग्रहं करोति इति सो मे अर्थमात्रं दास्यति येन पुनर्व्यवहारं करिष्यामि आत्मानं च पतितं उद्धरिष्यामि ॥ सो दानि तं कोशलराजं आशां कृत्वा दक्षिणापथातो अनुपूर्वेण कोशलराज्ञो विषयमनुप्राप्तः ॥ सो तहिं न्यग्रोधे कोशलराज्ञो सकाशमागतो ॥ राजा तं सार्थवाहं पृच्छति । धर्मभ्राते मा श्रान्तो सि क्लान्तो वासि विश्रम इमा शीतला न्यग्रोधच्छाया त्वं चाध्वाक्लान्तो ॥ सो दानि आह ॥ धर्मभ्राता सुखितो भवतु गमिष्यामीति ॥ राजा दानि आह ॥ धर्मभ्राता ते कहिं त्वरितं गमनप्रयोजनं यं नेच्छसि विश्रमितुं पि ॥ सो दानि आह ॥ अहं भद्रमुख अमुकातो अधिष्ठा-

1. B °paro kâle° M °parakâlo na bhûyaḥ catu ° gno gataḥ | B °gno gato e° — 2. M °turangena ba° B °gena varakâ ° shaye â° M °shayam âga°. — 3. BM °nipâte tâm̃ a° B °dyanti ta°. — 5. B °larâjñâ dharmi° M °darçi ca tâni prâ ° vyasanam âpadyanti tâni dri° B °nnam̃ 'dhigantum̃ râjyam̃° M °dhigantu râjyam̃ ° jananidânam imam̃° B °jaṇânidânam̃ imam̃° M °evam̃rûpam̃°.

7. M so vignam̃ tam̃° B °ekâ advitiyâm̃ ajñâtavegena da° M °tîyo ajñâ ° cchanti tatra° B °cchati | tatra° M °kecid vya ° lpayati karishyâmi | . — 10. M °ni gacchanto adhyâkilâtâ vâtâ° B °lâm̃tâ vâtâ° M °heshto çi° BM °nto âsati apalo ca samudra° M °kshiṇâto ko°.

12. M °rmiko makri° BM °paramânu° B °kshîṇânâbhyuddharati sârthamâtrâ° M °bhyuddharati arthamâtroye parigra ° rotîti | so me° BM °rthamâtrâm̃ dâ° M °syanti ye°. — 15. M °jam̃ âṇâm̃ kri°.

17[1]. M °grodho koçalarâjasakâ° B °sakâçam̃m â°. — 17[2]. B °ti dha°. — 18. M °çrânto vâsi klâ ° çramaṇa imâni çî° B °imâm̃ çîtalâm̃ nya° M °cchâyâm̃ tvam̃°. — 19[2]. BM °bhrâtâ te su°. — 20[2]. B °nam̃ | yan ne° M °nam̃ yam̃ neccha°.

21[2]. B °ho mudrayâtriko so | a° M °drajâtiko.

जातो सार्थवाहो समुद्रयात्रिको । सो अहञ्जातो स्वजातो अधिष्ठानातो प्रभूतेनार्थेन नानाप्रकारं पण्यमादाय समुद्रपत्तनेषु युक्तेन यानपात्रेण महान्तं समुद्रमोतीर्णो । तत्र मे महासमुद्रे तं यानपात्रं अर्थभरितं विपन्नं फलकेनाहं समुद्रातो जीवन्तो प्रत्युत्तीर्णो शरीरमात्रेण । सो हं गच्छामि कोशलराज्ञो सकाशं अर्थमात्रस्य अर्थाये येन पुनः व्यवहारं करेयं पतितं चात्मानं उद्धरेयं । एताये आशाये एवं दूरतो स्मि चरन्तो आगतो ॥

सो दानि कोशलराजा तस्य सार्थवाहस्य वचनं श्रुत्वा प्रारोदीदश्रूणि च प्रवर्तेति ॥ सार्थवाहो तं आह ॥ भद्रमुख किं रोदसि ॥ राजा आ[376ᵇ]ह ॥ रोदयामि यं त्वं विपन्नयानपात्रो आशाभूतो दूरतो मम उद्दिश्य आगतो कोशलराजा मम अर्थमात्राये संग्रहं करिष्यति येन पुनर्व्यवहारं च करिष्यामि पतितं चात्मानमुद्धरिष्यामि । मम च तं राज्यं काशिराज्ञा आक्रान्तं शरीरमात्रेण दक्षिणापथं प्रयातो येन केनचिद्व्यवहारेण आत्मनो वृत्तिं कल्पयिष्यामि । एवं रोदामि यत्त्वं मम शब्देन एवं दूरं आगतो इमा च मम एदृशा विपत्ती राज्यतो स्मि परिभ्रष्टो ॥ सो दानि सार्थवाहो तं कोशलराजानं गाथाये अध्यभाषे ॥

तव प्रवादेन हि त्यागशूर
दूरतो श्रुत्वा इह आगतो स्मि ।
मनोरथाशाबलवृंहिता मे
आशा निराशा कृत दर्शनेन ॥

राजा आह ॥

मनोरथशतान अहं प्रदाता
सदेवमनुजे सदृशो न मे स्ति ।

1. B so ahan ta° M °ahaṁ tato sva° B °shṭhânâto abhû° BM °ṇa mahantena samudraṁ o(M °dram u)tîrṇṇo(M °rṇṇo |) tatra°. — 3. BM °treṇa so°. — 4. M °sya arthâya | yena pûnar vyavahâ° B °ddhareye | . — 5. M °âsâye e° B °dûrato smiṁ ca° M °dûrato smiṁ tvaritam âgataḥ.

7. BM °d açruṇi° B °pravarttate || M °pravarttato. — 8². B bhadrasamudra kiṁ° M bhadrasubhadre kiṁ°. — 9. B °dayâmi yaḥ tvaṁ° M °dayâmi yas tvaṁ vipaṁnayânapâ° BM °gato | ko° M °çalarâjâ arthamâtrâye mama saṁ° BM °haṁ karishyati | ye° M °raṁ ca karishyati | patitaṁ cânsânam u°.

11. M °kecid vya°. — 12. M evaṁ vâdâni po tvaṁ mama ça ° dûram âgato imâṁ ca° B °gato | imâṁ ca° M °vipatti râtesmiṁ pari° B °shṭo so°. — 15. BM tatra pravâdena hastyâgaçûro(M °çûla) dû ° ihâga° M °to smiṁ.

17. B °thâsâba°M °thâsâbaravṛiṁ° B °hitâṁ â° M °hitâ âsâ nirâsâ kri°. — 20. BM âçâ manoratha(B °thâ)çatânâṁ a ° dâtâ loke sade°.

प्राणां त्यजिष्यं तव कारणाय
मा मे प्रवादो वितथो भवेया ॥

सो दानि राजा तं सार्थवाहं निराशं मूर्छित्वा भूम्यां पतितं समाश्वासयति त्वं दूरतो ममाशाभूतो उद्दिश्य इहागतो अहं तव तथा करिष्यामि यथा तव निष्फलं आगमनं न भविष्यति । तव कारणेनात्मानं परित्यजिष्यामि ॥ मम पश्चाद्वाहुं बंधित्वा काशिराज्ञो उपनामेहि । ततो ते काशिराजा तुष्टो प्रभूतं अर्थं दास्यति । कामं अहं आत्मानं परित्यजामि मा पुनस्तव निष्फला ममोद्दिश्य आशा भवतु ॥ सो दानि सार्थवाहो आह ॥

न उत्सहामि पुरुषर्षभस्य प्रचर्तुं पापं धनकारणार्थं ।
यथाश्रवो तादृशं दर्शनन्ते सुदुष्करं क्रियति लोकपण्डित ॥

राजा आह ॥

किं जीवितफलं तेषां येषां लोके श्रवो न महाभगो ।
अर्थार्थी न उपगतो भग्नप्रणयो निवर्तेय ॥
कामं शत्रुभिर्वधिष्यं सुदुष्करं
कामं शत्रुश्छेत्स्यति मह्य गात्रं ।
कामं हि प्राप्स्यं वेदनामतितीव्रां
दुःखं सहिष्यं मा च ते स्यान्निराशा ॥

सो च काशिराजा कोशलराज्ञो जीवितेन नन्दति प्रत्यहश्चैवं घोषयति यः कोशलराज्ञो शीर्षमानयति तस्य महान्तं दानं ददामीति ॥ यावत्तेन कोशलराज्ञा

1. M °kâlaṇâya ° pramâṅgo vi° B °pramâṁgo vi°. — 3. M °jâ taṁ sasârthavâhaṁ nirmûrcchi° BM °çvâsayati | tvaṁ° M °dûrato mamaçobhû ° çya samâgato ihâgato ahaṁ° B °hâgato | ahaṁ tatra kathâ kari ° nisphalaṁ | â° M °nisphalaṁ âgamaṁnaṁ bha° B °naṁ na karishyâmi ta°. — 5². M °huṁ bandhitvâ°.

6. M tatas te kâ ° bhûtam arthaṁ°. — 7. M kâmam ahaṁ° BM °nisphalâ | mamoddi-(M °modi)çya âçâ(B °aço) bha°. — 9. M °sya pravarttituṁ pâ° BM °dhanakaraṇârthaṁ (M °rtha) ya°. — 10. BM °çravâ tâ° M °n te dushka° B °raṁ krîya° BM °ṇḍitaḥ ‖.

12. B °phalan teshâṁ yeshâṁ loko çra° M °loke çave na° BM °hârâgo(B °go ‖). — 13. BM arthârthi na upagataṁ bhagnapraṇa(M °praça)yaṁ vivarttati |. — 14. BM kâmaṁ çatruhir ba(M °trûhi ba)dhishyaṁ sadu ° çatruṁ(M °trûṁ) cchetsyati mama gâ°.

16. B °psyaṁ vadanâm iti tî° M °danâṁ iti | tî° B °mâ ca tasyâṁ nirâçâ so° M °nirâṇâ. — 18. M sâ ca kâ ° tyahaṁ caivaṁ ghoshayati | yo koçalarâjâ çî° B °yaḥ koçalarâjñâ çîshaṁ ânayati | tasya ° ntaṁ dâyaṁ da° M °naṁ dâmîti ‖ B °mîti yâ°. — 19. M °râjñâ u°.

पुनर्पुनरुच्यमानेन स कोशलराजा सार्थवाहेन पश्चाद्बाहुबन्धनं कृत्वा काशिराज्ञो उपनामितं ॥

काशिराजा आह ॥ अहो अयं राजा शूरश्च कृतयोग्यश्च कथं त्वया बध्वा आनीतः ॥ यावत्तेन [377ᵃ] सर्वमात्मनः आगमनकारणं कथितं काशिराजा च विस्मयजातः आह ॥ न युक्तमस्माकं एवं धार्मिकस्य राज्ञो राज्यमपहर्तुमिति । पुनरपि कोशलराजानं स्वके राज्ये अभिषिंचिय काशिराज्यं गतः । यावत्तेन कोशलराज्ञा सार्थवाहस्य महान्तं धनस्कंधं दत्तमिति ॥

स्यात्खलु पुनः भिक्षवो युष्माकमेवमस्यादन्यः स कोशलराजा । नान्यस्तदा अहं स भिक्षवस्तदा कोशलराजा अभूषि ॥ नान्यो द्रष्टव्यः आज्ञातकौण्डिन्यः तदा सार्थवाहो अभूषि ॥ तदापि मया आत्मपरित्यागं कृत्वा एषो महता अर्थेन संयोजितः एतरहिं पि मया बहूनि दुःखपरित्यागशतानि परित्यजित्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धित्वा महतार्थेन संयोजितः ॥

समाप्तं आज्ञातकौण्डिन्यस्य जातकं ॥

भिक्षू भगवन्तमाहन्सुः ॥ भगवता पंच भद्रवर्गीया अन्यतीर्थिकसंश्रिता दारुणेन दृष्टिओघेन वुह्यमाना ततो दृष्टिगतिषु विनिवर्तयित्वा भयभैरवातो संसारसागरातो उद्धरित्वा क्षेमस्थले शिवे शमे अभये निर्वाणे प्रतिष्ठापिताः ॥ भगवानाह ॥ न भिक्षवः एतरहिमेव पंचका भद्रवर्गिका मया संसारसागरातो तारिता अन्यदापि मया एते महासमुद्रातो भग्नयानपात्रा अलेना अत्राणा अशरणा अपरायणाः कृच्छ्रप्राप्ता व्यसनमागता आत्मपरित्यागं कृत्वा महासमुद्रातो स्वस्तिना प्रतिष्ठापिताः ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

3². M ayam̃ aho râjâ° BM °badhyâ â° M °nîto | . — 4. M °sarva âtmano â° B °thitaḥ kâçi ° smayataḥ | âha na°.

6¹. M °koçalanam̃ svake râjye bhi°. — 6². M yâvarttena ko ° skam̃ndham̃ da°. — 8¹. M °lu bhikshavaḥ punar yushmâkam̃ eva ° râjño nâ°. — 8². M nânyas tadâ ko°. — 9. M °kauṇḍinyo tadâ ârtha ° bhûshiḥ | . — 10. M °tmatyâgam̃ kṛitvâ esho mahatâ artheñna sam̃yojitâ | etarahim̃° B °hûni dushyaparityâ° M °tyâgâni ça° BM °râm̃ sam̃mya° M °rthena samyajitâ | .

13. M iti çrîmahâvastuavadâne koçalarâjño jâtakam̃ samâptam̃ || . — 14¹. M atha bhikshur bhaga°. — 14². BM °pam̃ca bhadrivargî(B °rgi)yâ ° dâruṇe dṛishṭio° M °vucyamâ° B °hyamâvâ teto dṛi° BM °shṭigateshu° M °yitvâ bhayam̃bhai° B °sthala çiveçane a° M °çive a ° pitâ || .

16. M °kshavo etarahim̃m evam̃ pam̃° B °him evam eva pam̃ ° sam̃sârasâgarâto anya° M °dâpi mayâ evam̃ mahâsamudrâto bhagna ° yanâ kṛicchra ° pratisthâpitâḥ || . — 20¹. M °hansur anya°. — 20². B °gavâm̃ | M °gavân | . — 20⁴. BM °kshavaḥ bhû°.

भूतपूर्वं भिक्षवो अतीतमध्वाने जम्बुद्वीपे वाणिजका धनहेतुना यानपात्रेण महासमुद्रमवतीर्णास्तेषां तं यानपात्रं मकरेण मत्स्यजातेन भिन्नं तहिं तहिं ये केचिद्वाणिजा . . . . . . . . . . . . . . . . . . बाहाहि प्लवन्ति सार्थवाहेनापि किंचित्पूर्वं प्रतिपन्नं सो पि बाहाहि समुद्रे प्लवति ॥ तस्य दानि सार्थवाहस्य समीपे पंच वाणिजका बाहाहि सार्थवाहेन सार्धं महासमुद्रे प्लवन्ति ॥ सार्थवाहस्यैतदभूषि ॥ नास्माभिः शक्यं बाहाहि इमं महासमुद्रं तरितुं इहास्माभिः सर्वैहि मरितव्यं श्रुतं च मे महासमुद्रो मृतकुणपेन सार्धं रात्रिं न प्रतिवसति । यं नूनाहं देहपरित्यागं कृत्वा इमां पंच वाणिजां इतो महा[377b]समुद्रातो स्वस्तिना स्थलं प्रापयेयं ॥ सार्थवाहस्य च शस्त्रं व हस्तगतं आसी । सो तेषां पंचानां वाणिजकानां आह ॥ मम सर्वे लगथ अहं वो स्वस्तिना महासमुद्रातो स्थले प्रतिष्ठापयिष्यामि ॥ ते दानि तत्र उदके अप्रतिष्ठे अनालम्बे सर्वे पंचका वाणिजकाः सार्थवाहस्य लग्ना ततो सार्थवाहेन शस्त्रेण स्वगलकं विकर्तितं न महासमुद्रो मृतकुणपेन सार्धं रात्रिं प्रतिवसति ॥ अथ खलु भिक्षवो क्षिप्रमेव महासमुद्रेण तं कुणपं स्थले वास्थापितं ॥ ते दानि सर्वे पंच वाणिजकाः सागरवेगेन कुणपेन सार्धं स्थलं क्षिप्ता । इयं ज महापृथिवी अतिरिव संप्रचलिता महंतो च भूतानां निनादो अभूषि । देवा नागा यक्षा असुरा महासमुद्रे किमिदं ति उदीरिंसु ॥ महासमुद्रदेवता आह ॥ एषो बोधिसत्वो वाणिजकेहि सार्धं यानपात्रेण महासमुद्रमवतीर्णः तेषां तं यानपात्रं मकरेण मत्स्यजातेन भिन्नं येहि च वाणिजकेहि पूर्वं प्रतिपन्नं ते बोधिसत्वेनात्मपरित्यागेन महासमुद्रातो स्थलं प्रापिता ।

1. M °pe vânijakâ dha ° tîrṇṇo teshâm̃° B °shâm̃ tam̃ yânapatra makare° M °nnam̃ tahim̃ ye° BM °vâṇijâ te(B °jâ ke)hi pûrvagṛihîtokteti ajñâ(B °jñâtâ) vâ apûrvâ(B °rvo) bâhâhi plavanti(M °nti) sârtha° M °dre plavanti | . — 4. B °ni sârthahasya° M °bâhâhi sârddham̃ sârthavâhena mahâsa° BM °plavanti sârtha°. — 5. B °bhûshi nâsmâ°.

6. B °iha 'smâbhiḥ bhavitavyam̃ çru° M °smâbhis sarve bhavitavyam̃ | çrutam̃ ° mudre mṛitakûṇapeṇa sârddha râ° B °mṛitakûṇa ° trim̃ nayati va°. — 7. M °stharam̃ prâ°. — 9[1]. M °sya ca ṇastrakam̃ hastagatam̃ âsît | B °stravâm̃ hastagatam̃ âsî so°. — 9[2]. M °jakâm̃ â°. — 10. M °sarvam̃ lagna°.

11. B °shṭhe | anâ° M °pam̃ca vâṇijakâ sârthavâhasya° B °kam̃ vivartti° M °mudrâto mṛi ° peṇa sârddha râ°. — 13. M °lu kshi ° B °mudro tam̃° M °mudre tam̃°. — 14. B dâni ° garo vegana ku° M °garâ ve ° peṇa sârddham̃ talam̃ kshiptkâ || B °rddham̃ talam̃ kshi°. — 15. M °hâsapṛi ° pracaritâḥ mahanto ca°.

16[1]. BM °nâga yakshâ° M °m idaṇ ti u° B °udîritsuḥ || . — 17. M °sârddha yânapâtre° BM °bhinnan te(M °nnam̃ te)hi ca vâṇijakehi ca pûrvo pratipannâ yehi(M °pannehi ca) vâṇijakehi pûrvâ na(B °ṇa) pratipannâs te bo° M °dhisatvânâtma ° pitâḥ mayâ°.

मयं प्रमत्तविहारा येहि न समन्वाहृतं एवं दुष्करकारका बोधिसत्वा सर्वसत्वानां अनुग्रहप्रवृत्ता ॥

भूतपूर्वमतीतं बोधाय चरन्तो वादिप्रवरो ।
ओतीर्णो लवणजलं तिमिमकरनिसेवितं रम्यं ॥
अथ मत्स्येन मकरेण भग्नं पात्रं जले समुद्रस्मिं ।
सो वाणिजो विसार्थो परिप्लवति सागरे धीरो ॥
अत्राणां अनभिसरां दुःखार्दितां वाणिजा विदित्वान ।
संचिन्तयति उपायं कथं दुःखितां सुखये सत्वा ॥
तस्यासि परिवितर्को श्रुतं मया सागरो मृतकुणपेन ।
न संवसति लवणसलिलो तिमिमकरनिषेवितो रजनीं ॥
त्यजेयमात्मानं मा वाणिजका सागरे विनस्यन्ते ।
इति दृढमतिस्य बुद्धी चित्तचरितपारमिगतस्य ॥
या एष महाकरुणा . . . . हितैषी सर्वसत्वेषु ।
समुपचिता दीर्घरात्रं सास्य भजहे चित्तसंतानं ॥
सो अवच वाणिजगणं आत्मं त्यजिष्यामि स्निग्धथ ममाङ्गे ।
न हि लवणसलिलदेवता धरेति रजनीं मृतशरीरं ॥
तीक्ष्णं ग्रहेत्व शस्त्रं निवर्तये आत्मनो . . . शरीरं ।
क्षिप्रं समु[378a]द्रतीरं वाणिजका सर्वे उपनीता ॥
अतिप्रचलिता गिरिधरा सनगरनिगमा सशैलवनषण्डा ।

1. BM mayâ pra ° râ yena sa° B °matvâhṛi ° nâm̃ agra° M °vṛittâḥ | . — 3. B °pûrvam̃ atî° M °carantam̃ vâhinâm̃ pra° B °vâdinâm̃ pravaro o°. — 4. B °tam̃ ramyâm̃ || . — 5. BM atha makareṇa matsyajât..na bhagne(M °gna) yânapâtre jale° M °mudrasmim̃ mo° B °drasmim̃ so°.

6. BM samudra(M °dre)smim̃ so(M °mo) vâṇijo hosârtha(M °rtha pâri)pla ° garam̃ dhî°. — 7. BM °trâṇam̃ a ° tâm̃ vaṇijâm̃ viditvâ sam̃°. — 8. BM °katham̃ hi du ° sukhâpaye satvâ(M °tvâm̃) ta°. — 9. BM °yâ kila sâgaro mṛitaku(B °ro | mṛitakûna)peṇa sârddham̃ na°. — 10. BM °vasati | lavaṇasa(M °vaṇaṇa)lilâ ti ° janîyam̃ | .

11. B yam̃ nûnâham̃ tyajemam̃ âtmâ° M yan nûnâham̃ tyajemam âtmâ°. M *a de plus une interversion et place, ici, après* âtmânam̃, *les mots* tyajishyâmi, etc. (*l.* 15) *jusqu'à* çâstram̃ nivartaye (*l.* 17). — 12. B °buddhi ci° M °ddhir citta°. — 13. BM yo a ° ruṇo hite ° shu sa°. — 14. B °rghanâtram̃° M °ttasantânam̃. — 15. M so vaca° B °ṇam̃ | âtmânam̃ tya° M °ṇam̃ | âtmano° (*l.* 17, *cf.* 11) BM °ṅge na°.

16. BM °janî mṛi ° ram̃ tî°. — 17. B tîkshṇâm̃ gahetva çastra ni° M tîkshṇâm̃ gṛihîtva çâstram̃ nivarttaye | mâ vâ° BM °tma ° no nivarttaye çarîram̃ kshi°. — 18. BM °rve samupanîtâ a°. — 19. BM °cali(M °ri)tâ gurudhâ° M °nigamasa° BM °shaṇḍe(B °ṇḍâ) sâgara°.

सागर सदानवपुरा सभुजगभवना च संक्षुभिता ॥
किमिदं ति जनो पर्वतवनदेवता भुजंगा कथयेन्सुः ।
. . . . . प्रतिभणे लवणसलिलदेवता दुःखिता ॥
एषो गजसत्वसारो बोधाय चरन्तो वादिप्रवरो ।
उत्तीर्णो लवणसलिलं ममेदं न विदितं प्रमत्ताये ॥
सो भिन्नयानपात्रो परिपूरति सागरे नरप्रवरो ।
आत्मं प्रियं परित्यजि परजनपरिमोचनार्थाय ॥
तस्यैवं अनुभावा प्रचलिता वसुंधरा ससागरमेरु ।
गुह्यक सदानवपुरा सभुजगभवना च संक्षुभिता ॥
कथं नाम सर्वसत्वा शक्ता प्रतिकर्तुं सत्वसाराणां ।
बोधाय चरन्तानां प्रागेव सर्वज्ञभूतानां ॥
यस्तु जिनशासनस्मिं प्रतिपन्नो भवति सर्वभावेन ।
एतावता प्रतिकृतं भवति हि गजसत्वसारस्य ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन सार्थवाहो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोरहं स भिक्षवः सार्थवाहो अभूषि ॥ नान्ये ते पंच वाणिजकाः । एते ते पंचका भद्रवर्गिकास्तदापि ते एते मया आत्मपरित्यागं कृत्वा महासमुद्रातो स्वस्तिना स्थले प्रतिष्ठापिता एतर्हिं पि मया आत्मपरित्यागं कृत्वा संसारातो तारिता निर्वाणे प्रतिष्ठापिताः ॥

समाप्तं पञ्चकानां भद्रवर्गिकाणां जातकं ॥

भिक्षू भगवन्तमाहन्सुः ॥ भगवता सदेवमानुषाये परिषाये धर्मं देशितं ॥

1. BM °dânavapu(M °pû)raṁ sabhu ° nâçca saṁkshubhi(M °kshusi)tâ ki°. — 2. M °m idan ti ja° BM °bhujagâ° M °yetsuḥ pra° B °yetsuḥ | pra°. — 3. BM °khitâ e°. — 4. BM esha gajasatva ° vâdinâṁ(M °naṁ |) pravaro u°. — 5. M °ṇaçalilaṁ same°.

6. M °pûrayati° BM °garaṁ naravaro | . — 7. B °janamocanârthâṁya | . — 8. M tasyaisha manubhâvo pracarita vasundharâ° B °syaiva marubhâvo pra ° sâgaraṁ meru gu°. — 9. B °dânavanapuraṁ sa° M °dânavapûraṁ sa° BM °nâç ca saṁ° M °bhitâḥ | . — 10. BM °rvasatvâ pratikartuṁ çaktâ satva(M °ktâḥ satvâ)sârâṇâṁ(M °nâṁ) bo°.

11. B °calantânâṁ prâjñe va sarvabhû° BM °nâṁ ya°. — 12. M °çâmanasmiṁ° BM °ti | sa° B °vena e°. — 13. M etâṁ ca prakṛi° B °ti || hi°. — 14². M °kshavaḥ yu° B °shmâkam asyâ° B °shi nai°. — 15¹. B naivaṁ°. — 15². M °kshavo sâ°.

16². BM °sthale pratishṭhâpitâ | e° M °shṭhâpitâ | . — 19. M iti çrîmahâvastuavadâne paṁcakâ bha ° kaṁ samâptaṁ || . — 20¹. M bhikshu bha°. — 20². B °dhamaṁ de° M °dharma de°.

विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो अशीतिहि अनुव्यंजनेहि उपशोभितशरीरो अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतो दशहि तथागतबलेहि बलवां चतुर्वैशारद्येहि सुविशारदो प्रासादिको प्रसादनीयो शान्तेन्द्रियो शान्तमानसो उत्तमदमशमथपारमिप्राप्तः नागो यथा कारितकारणो अन्तर्गतेहि इन्द्रियेहि अबहिर्गतेन मनस्थितेन धर्मताप्राप्तेन गुप्तो नागो जितेन्द्रियो ह्रदमिवाच्छो अनाविलो विप्रसन्नो रत्नयूपं वा समुन्नतो सुवर्णयूपं वा प्रभासति तेजोराशि वा शिरीया देदीप्यमानो असेचनको अप्रतिकूलो दर्शनाये इहैव वाराणस्यां विहरति च नद्या वरणाय पारिमे तीरे मुक्तो मुक्तपरिवारो शान्तो शान्तपरिवारो दान्तो दान्तपरिवारो ब्राह्मणो ब्राह्मणपरिवारो श्रोत्रियो श्रोत्रियपरिवारो स्नातको स्नातकपरिवारो वेदको वेदकपरिवारो पारगो पारगपरिवारो स्थलगतो स्थलगतपरिवारो सर्वाकुशलधर्मप्रहीणो सर्वकुशलधर्मसमन्वागतो अभिभू अनभिभूतो आज्ञातार्थदर्शी वशी वशवर्ती देवमनुष्याणां अर्थचर्यां चरति ॥

एवं गृहपतिना द्वितीयकुलिकेन यशोदस्य कुमारस्य पुरतो बुद्धस्य वर्णं भाषितं । कुमारो च यशोदो पूर्वयोगसंपन्नो चरमभविको ॥ तस्य दानि भगवतो दर्शनकामता उदपासि कामेषु चास्य जुगुप्सना उत्पन्ना योनिशो मनसिकारो निष्क्रम्ये चैवं चित्तं प्रस्कन्दति सन्तिष्ठति प्रसीदति ॥ सो दानि रात्रीये अर्धरात्रीसमये प्रतिबुद्धो पश्यति तमन्तःपुरं ओसुप्तं काचिद्वीणामुपगुह्य काचि तूणं काचित्सुघोषकां काचित् नकुलं काचिद्वेणुं काचित् महतीं काचिद्वादिशं काचिद्विकूटकं काचिद्भ्रमरिकां काचिदेकादशिकां काचित् मृदंगं काचिदालिंगिकां काचित्पणवं काचि दर्दुरं काचित्परस्परस्य अंशे बाहां कृत्वा काचिद् हनु[393a]कां गृह्य

catuhi vai° BM °diko prasada° M °uttamaçamathapâramiprâpto nágo yathâ° BM °tnayûshaṁ (M °yûthaṁ) vâ samudgato(M °taḥ) suvarṇṇayûshaṁ(M °yûthaṁ) vâ prabhâsati | tejorâçi (B °çiṁ) vâ çiriyo(M °ya) dedipyamânaṁ asecanako apratikû(M °ku)lo ° syâṁ viharati ca bhavyâ varaṇâ(M °bharaṇâyâ) pârime ti° M °ktaparivâro çânto çântaparivâro brâhmaṇo brâhmaṇaparivâro çrotiyo çrotiyaparivâro snâtako snâ° B °go pâragaparivâro sthalagata sthalagatoparivâro || sarvâ° M °rvân kuçaladharmapra° BM °nvâgato abhibhûto ana° M °jñânârthîdarçâ va vaçavartti°.

14. M °ddhasya kumârasya purato buddhasya va°. — 15[1]. B kumârasya ca° M °yogasampanno°. — 15[2]. M °udupâsi° B °câsya jogustanâ utpa° M °tpanno yoni manasikâra nishkramyaivaṁ° B °ço manasikâra nishkramye ca naṁ ci° BM °ttaṁ praskaṁdati santi(M °saṁti)shṭha°.

17. M °rddhrâtresmiṁ samaye° B °çyati ca tantaḥ° M °vinân upagrihya kâcit sughoshaṁ kâcin naku° B °guhya kâci trâṇâṁ kâcit su° M °t mahatiṁ kâcid vâ° d bhramaṇikâ kâcid e° BM °çikâ kâcit mridaṁgaṁ(M °daṅgaṁ) kâcid aliṁgikâ kâcit pa° M °raṁ kâcin puruspa-rasya aṅge bâ° B °sya aṁçe bâ° M °tvâ kâcid bhanukâṁ° BM °sâṁcillolâ° M °gharanti | .

कासांचिज्ज्ञाला घरति ॥ कुमारस्य तं दृष्ट्वा विकृतमन्तःपुरं श्मशानसंज्ञा उत्पन्ना अभिनिष्क्रमितुकामो च भगवतो सन्तिके अगाराद्नगारियं प्रव्रजिष्यामीति ॥

शक्रो देवानामिन्द्रो अनन्तकेहि देवशतसहस्रेहि परिवृतो गन्धमाल्यमादाय आगतो । देवपुत्रेहि सोपाणा अक्षीपिता यशोदे च पश्चिमे सोपानके पादतला निक्षिपित्वा देवेहि दिविजं कुसुमवर्षं ओसृष्टं श्रेष्ठिकुले दिव्यानां कुसुमानां जानुमात्रं ओघं संवृत्तं ॥ कुमारो देवशतसहस्रेण संवृतो वाराणसीतो नगरातो निर्गम्य येन भगवांस्तेनोपसंक्रमे ॥ भगवता प्रभा प्रमुक्ता ॥ अद्राक्षीद्यशोदो कुलपुत्रो भगवन्तं वरुणाये नदीये पारे असेचनकं अप्रतिकूलं दर्शनाये दृष्ट्वा भगवन्तं [illegible]पादुकेषु उत्तरित्वा भगवन्तं गाथाये ध्यभाषे ॥

उपद्रुतो स्मि श्रमण उपद्रुतो स्मि मारिष ॥

भगवानाह ॥ एहि कुमार मा भायाहि इदन्तमनुपद्रुतं इमस्मिं धर्मे स्वाख्याते वीतरागो भविष्यसि ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्तनिषण्णः ॥ तस्य यशोदस्य श्रेष्ठिपुत्रस्य भगवां प्रसादनीयां कथां कथे । तद्यथा दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां ॥ अभिप्रसादेसि यशोदो श्रेष्ठिपुत्रो भगवतो सन्तिके चित्तमभिप्रसन्नः ॥ तस्य पुनर्यशोदस्य श्रेष्ठिपुत्रस्य भगवां चत्वार्यार्यसत्यानि प्रकाशयति । दुःखं आर्यसत्यमाचिक्षति देशयति प्रज्ञापयति विवरति विभजति उत्तानीकरोति प्रकाशयति । दुःखसमुदयमार्यसत्यं । दुःखनिरोधं दुःखनिरोधगामिनीप्रतिपदार्यसत्यं आ-

1. M °kritaṁm antaḥ ° tpanno abhinishkramituṁ | kâmâ ca bha°. — 3. B °dâya gato de°. — 4. BM °trehi sopâdânâ(M °nâṁ) alli ° çodena pacchi(M °na ca pacchi)mena ca sopânakasya pâda° M °pitvâni de° BM °jaṁ kusumaṁ varshaṁ osrishtaṁ(M °shtaṁ) çreshtikule° M °numâtre o° B °ttaṁ ku°.

6. M °hasraṁ saṁvritto vâ° B °sreṇaṁ vritto vâranasi° M °gavânsteno ° kramitvâ. — 7[1]. B bhagavato prabhâ° M °gavato prabhâ muktâḥ B °mukto | . — 7[2]. M °tro bhagavaṁntaṁ varaṇâ° B °pratishkûlaṁ° M °pratikulaṁ° BM °pâdakeshu° M °thâye 'dhya°. — 10. BM upadruto smiṁ çrama(M °çrava)ṇa° B °to smiṁ mâ° M °rishaḥ || .

11[2]. M °ra ma bhâ° M °ra ma bhâhi idan taṁ anu°. — 13. BM °çreshtiputro° M °yena bhagavânsteno ° gavato pâ ° sharṇno | B °sharṇṇas tasya°. — 15. BM tadyathâ || dâ° B °çîlaka svarga° M °rgakathâṁ puṇyakathâṁ puṇyakathâṁ puṇyavi°.

16[1]. BM °bhiprâsâdehi || yaçodâ çreshtipu ° sannas tasya°. — 16[2]. M °punaḥ yaço° BM °çreshipu ° gavâ(M °vâṁ) cchutvâ°. — 17. B °cikshiti de° M °cikshishyati de ° jñâpayati prasthâpayati viva° B °ttânikaro°. — 19[1]. M °mudayân âryya°. — 19[2]. BM °yâvan pra°.

चिष्ठति यावत् प्रकाशयति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो तत्रैवासने निषण्णो तिस्रो भिज्ञा षडभिज्ञा बलवशीभावं साक्षीकरोति अनेकविधां ऋद्धिं प्रत्यनुभवति ॥

अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ तस्यैव रात्र्या अत्ययेन यशोदं श्रेष्ठिपुत्रं अपश्यन्तौ अश्रुकण्ठा रुदन्मुखा महाज्ञातिस्कन्धस्य परिवृता बहूहि प्राणसहस्रेहि सार्धं [393b] वाराणसीतो निर्यात्वा येन भगवांस्तेनोपसंक्रमे यशोदं श्रेष्ठिपुत्रं अन्वेषन्ता । अद्राक्षीत् यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ नदीये वरणाये तीरे यशोदस्य मणिपादुकानि दृष्ट्वा च पुनः यशोदस्य मणिपादुकानि गृह्य मुखेन परिचुम्बेन्सुः रोदेन्सुः क्रन्देन्सुः शोचेन्सुः परिदेवेन्सुः ॥ रोदित्वा क्रन्दित्वा शोचित्वा परिदेवित्वा येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदुवाच ॥ अद्राक्षीद्भगवां यशोदं श्रेष्ठिपुत्रं ॥ यशोदो श्रेष्ठिपुत्रो तथारूपां चेतोसमाधिं समापद्ये यथा नं तत्रैव निषण्णस्य मातापितरौ नादृशेन्सुः न च अन्यो जनकायः ॥ अथ खलु भगवां यशोदस्य श्रेष्ठिपुत्रस्य मातापितरं आमन्त्रयति ॥ निषीदथ गृहपते । स्थानमेतं विद्यति यशोदं श्रेष्ठिपुत्रं पश्यथ दृष्ट्वा च पुनः यशोदे श्रेष्ठिपुत्रे चित्तं प्रसादेथ ॥ अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ भगवतो पादौ शिरसा वन्दित्वा एकमन्ते निषीदेन्सुः अन्यो च जनकायो ॥ अथ खलु भगवां यशोदं श्रेष्ठिपुत्रं मनसाध्यभाषे । ऋद्धिप्रातिहार्यं विदर्शेहि ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो तालमात्रं वैहायसे संस्थितो अनेकविधं ऋद्धिप्रातिहार्यं विदर्शयन्तो सो एको पि भूत्वा बहवो भवति बहुधापि भूत्वा एको भवति

1. BM °çreshṭipu° B °sharṇṇo | tisro° M °sharṇṇo tisro ° bhijño bala° BM °nekavidhaṁ ṛiddhi pra° B °bhavati a°. — 4. BM °lu yaçodasya çreshṭiputra° M °daṁ çreshṭiṁ putraṁ sarveshâṁ tân adrâ° (*l.* 7) B °daṁ çreshṭiputraṁ apraçya ° nmukhî mahâ ° hûni prâ ° saṁkrâme || yaço° B °daṁ çreshṭiputraṁ sarveshân tâ adrâ°.

7. BM °kshît | yaçodasya çreshṭiputra° M °tîre yaçodasya maṇipâdukâni gṛi° BM °khe ca paricuṁbetsuḥ rodetsuḥ krande(M °kraṁde)tsuḥ çocetsuḥ paridevetsuḥ ro°. — 9. M °yena bhagavan teno ° mitvâ bhagavato pâ°.

11[1]. BM °çreshṭiputraṁ tathârû°. — 11[2]. M °dye | yathâ yaṁ tatraivaṁ ni° BM °sharṇṇasya° BM °driçetsuḥ(B °tsuḥ || ) anyo° M °kâyo | . — 13. M °gavân yaço° BM °ntrayati ni°. — 14[2]. BM °daṁ çreshṭiputraṁ° M °çreshṭiputro ci° B °çodo çreshṭiputro manasâ° (*l.* 17) M °prasideya || . — 15. M °çreshṭipu ° nsuḥ anye ca janakâye | .

17[1]. M °çreshṭipu° B °sâ adhyeshe ṛi° M °bhâshaṁ | . — 19. BM °çreshṭiputro ° vaihâyasaṁ saṁsthi° M °nto saikâpi bhûtvâ bahavo bhavanti | bahu° B °vo bhavanti bahudho pi bhûtvâ e° M °âvibhâvan tirobhâvan tirokudyan tirauçailan tiroparva° B °rbhâvan tirokudyaṁ tiloçai°.

आविर्भावं तिरोकुड्यं तिरोशैलं तिरोपर्वतेषु असज्जमाणो गच्छति । इमस्मिं च पृथिवीयं उम्मज्जननिमज्जनं करोति । सय्यथापि नाम उदके पि अभिद्यमाणो गच्छति तय्यथापि नाम पृथिवीयं । इमावपि चन्द्रसूर्या एवंमहर्द्धिका एवंमहानुभावो पर्यङ्केन निषण्णः पाणिना परिमार्जति परामृषति यावद्ब्रह्मलोकं कायेन वशी वर्तेति । विविधानि च यमकानि प्रातिहार्याणि करोति हेष्टिमं कायं प्रज्वलति उपरिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि श्रवन्ति उपरिमो कायो प्रज्वलति हेष्टिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति वामो पार्श्वो ज्वलति दक्षिणातो पार्श्वातो शीतस्य वारिस्य पंच धाराशतानि श्रवन्ति दक्षिणो पार्श्वो ज्वलति वामातो पार्श्वातो शीतस्य वारिस्य पंच धाराशतानि श्रवन्ति ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो नीलांजनवर्णं ऋषभमात्मानं ऋद्धीये अभिनिर्मिणित्वा पुरस्तिमायां दि[394ª]शायामन्तरहायति पश्चिमायां दिशायां प्रादुर्भवति पश्चिमायां दिशायां अन्तरहायति पुरस्तिमायां दिशायां प्रादुर्भवति दक्षिणायां दिशायां अन्तरहायति उत्तरायां दिशायां प्रादुर्भवति उत्तरायां दिशायां अन्तरहायति दक्षिणायां दिशायां प्रादुर्भवति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो सिंहमृगराजमात्मानमृद्धिये अभिनिर्मिणित्वा दाठी बलवां केशरी त्रिखुत्तं सिंहनादं नदित्वा पुरस्तिमायां दिशायां अन्तरहायति पश्चिमायां प्रादुर्भवति पश्चिमायां दिशायामन्तर्हायति पुरस्तिमायां दिशायां प्रादुर्भवति दक्षिणातो

1. B °yaṁ utsajjati majjanaṁ° M °yaṁ ujjamati majjanaṁ°. — 2. BM °dyamânâ gacchati || ta° M °nâma itbi° BM °yaṁ i°. — 3. B °sûryo evaṁ maha° M °bhâvâ paryyakena nisharṇṇo pâ° B °nishaṇṇeḥ pâṇinâ parimâjjati parâ° M °yâvacca brahma ° kâyena ca çobhateti | B °yena vaço vartteti | . — 5. M °uparimâtro kâ ° uparimo kâyo prajvalite heshṭimâtro kâ ° tâni çrava° B °nti | vâmo pârçve jva° M °vâ me pârçve çitasya° dakshiṇe pârçve jva° B °lati | vâmâto pârçvâto paṁca°.

11. BM °çreshṭiputro° M °lâṁjana risha° B °rṇṇaṁ risha° B °rmiṇî vâ ° antarahâyati | pa° M °çcimâyâṁ diçâyâm aṁtarahâyati | dakshiṇâyâṁ diçâyâṁ prâdurbhavati | paçcimâyâṁ diçâyâm antarhâyati° B °hâyati | purastimâyâṁ diçâyâṁ prâdurbhavati | dakshiṇâyâṁ diçâyâṁ antarahâyati | uttarâyâṁ diçâyâṁ prâdurbhavati | uttarâyâṁ diçâyâṁ antarahâyati | da° M *omet* prâdurbhavati uttarâyâṁ diçâyâṁ B °kshiṇâyaṁ di° M °ṇâyâṁ prâ°. — 15. BM °çreshṭiputro° M °tmânam riddhiye° BM °rmiṇi(M °ṇî)tvâ dâṭî balaṁ keçarî trikshustaṁ(M °çarîṁ trishkrityaṁ) siṁhanâdaṁ nanditvâ purastimâyâṁ diçâyâṁ antarahâyati | (M °çâyâm antahâyimi) paçci ° çcimâyâṁ diçâ(B °çâyâṁ)m antarahâyati (B °ntarhâyati | ) pu ° çâyâṁ prâdurbhavati | dakshiṇâto antarhito uttarâto(M °râyâṁ) prâdurbhavati | uttarâto antarhi(M °ntahi)to dakshiṇâyâṁ prâdurbhavati | bhûmyâm antahi(M °myân antarhi)to antarikshe prâdurbhavati | antarî°.

अन्तर्हितो उत्तरातो प्रादुर्भवति उत्तरातो अन्तर्हितो दक्षिणायां प्रादुर्भवति भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भवति अन्तरीक्षे अन्तर्हितो धरण्यां प्रादुर्भवति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो सर्वश्वेतं हस्तिनागमात्मानं ऋद्धिये अभिनिर्मिणित्वा षड्दन्तं इन्द्रगोपशीर्षं सप्ताङ्गसुप्रतिष्ठितं कुमुदवर्णं पुरस्तिमायां दिशायामन्तर्हितो पश्चिमायां प्रादुर्भवति पश्चिमायां अन्तर्हितो पुरस्तिमायां प्रादुर्भूतः दक्षिणातो अन्तर्हितो उत्तरायां प्रादुर्भूतः उत्तरायामन्तर्हितो दक्षिणायां प्रादुर्भूतः भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भूतः अन्तरीक्षे अन्तर्हितो भूम्यां प्रादुर्भवति ॥ अथ खलु यशोदो कुलपुत्रो चक्रवर्तिवेषमात्मानमभिनिर्मिणित्वा सप्तरत्नसमन्वागतं चतुरङ्गेन बलकायेन संपरिवृतो पुरस्तिमायां दिशायां अन्तर्हितो पश्चिमायां प्रादुर्भूतः पश्चिमायामन्तर्हितो पुरस्तिमायां प्रादुर्भूतो दक्षिणायामन्तर्हितः उत्तरायां प्रादुर्भूतो उत्तरायां अन्तर्हितः दक्षिणायां प्रादुर्भूतो भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भूतः अन्तरीक्षे अन्तर्हितो भूम्यां प्रादुर्भूतः ॥

अथ खलु यशोदो कुलपुत्रो तालमात्रं अन्तरीक्षे गच्छति पि तिष्ठति पि निषीदति पि शैय्यमपि कल्पयति परितपति पि परिभ्रमति पि । तद्यथापि ग्रीष्माणां पश्चिमे मासे संघट्टका नाम वाता वायन्ति एवमेव यशोदो श्रेष्ठिपुत्रो तालमात्रं वैहायसमन्तरीक्षे गच्छति पि तिष्ठति पि निषीदति पि शैय्यमपि कल्पयति परितपति परिभ्रमति पि । एकतालातो द्वितालातो स्थितो ए[394b]को भूत्वा बहुधा भवति बहुधा भूत्वा एको भवति । यथा प्रथमे परिवर्तके तथा कर्तव्यं यावत्सप्त-

3. BM °çreshtiputro ° stinâgamm â(M °gam â)tmânam riddhi(M °ddhi)ye abhinirmini-(M °nî)tvâ shaddanta indra° M °gopakaçirsho saptângasupratisthitam° BM °rnnam purastimâyâm diçâyâm antarhi(B °ntahi)to paçcimâyâm prâdurbhavati | paçcimâyâm a(M °yâmm a)ntarhito purastimâyâ pradurbhûtah(M °rbhûto |) dakshinâto antarhito utta ° ttarâyâm antarhi(B °ntahi)to dakshinâyâm prâdubhûtah bhûmyâ(B °myâm a)ntarhito antarî(M °rikshe) prâdurbhûtah(M °tah | ) antarî° M °kshe prâdurbhûto bhûmyâm prâdurbhûto bhavati.

7. B °kravarttive° M °rttiveçam âtmâ ° rmmitvâ sapta ° ngena barakâye° BM °vrito purastimâyâm(B °stimenam) diçâyâm antarhito(M °rhitâ) paçci ° çcimâyâm antarhi-(B °ntahi)to purastimâyâm(B °yâ) prâdurbhûto(M °rbhûtah) dakshinâyâm antarhitah (M °rhito) uttarâyâm prâdurbhûto(M °rbhûtah | ) uttarâyâm a(M °yâm a)ntarhitah(M °rhito) dakshinâyâm prâdurbhûto(M °rbhûtah | ) bhûmyâm antarhitâ(B °ntahito) antarî°.

13. M °tro târamâtram°. — 14. M °ttakâ nâmma vâto vâyanti ‖ e° B °ttakâ nâma parvatâ vâyanti evam ena yaço° BM °çreshtipu° B °bhramati e°.

17. M °sthitah eko bhû°. — 18. M °rivarttate tathâ ° t saptatâlam saptatâlam saptatâlâto shadtâlam shadtâlâto pamcatâle sthitah pamcatâlâto catustâlâto tritâlasthito tri° B °saptatâlâto shattâlam shattâlâto pam ° pamcatâlâto catu ° tustâlâto tritâlasthito tritâlâto dvitâle shtito dvi ° dharanyâ sthito | .

तालं सप्ततालातो षट्तालं षट्तालातो पंचताले स्थितो पंचतालातो चतुस्ताले चतुस्तालातो त्रिताले स्थितो त्रितालातो द्विताले स्थितो द्वितालातो एकताले स्थितो एकतालातो धरण्यां स्थितो एको पि भूत्वा बहुधा भवति बहुधापि भूत्वा एको भवति ॥ इति आविर्भावं तिरोकुड्यं तिरोशैलं तिरोपर्वतेषु असज्जमानो गच्छति इमस्मिं पृथिवीयं उन्मज्जति निमज्जति । धरणीतो अभ्युद्गम्य गच्छति पि तिष्ठति पि निषीदति पि शय्यामपि कल्पयति परितपति परिभ्रमति पि ॥

अथ खलु अन्यतीर्थिकचरकपरिव्राजका त्रैदण्डिकमानन्दिकगुरुपुत्रकगौतमधर्मचि[illegible]वृद्धश्रावकतृतीया उलूकपक्षिकभगिनी श्रमणा यशोदस्य श्रेष्ठिपुत्रस्य इ[illegible]नि एवंरूपाणि विविधानि विचित्राणि ऋद्धिप्रातिहार्याणि दृष्ट्वाश्चर्याद्भुतसं[illegible]मसंहृष्टरोमजाता अभूत्सुः यावत्स्वाख्यातो भगवतो गौतमस्य धर्मविनयो विवृतो दण्डच्छिन्नपिलोतिको अलं अलंकाराय अलं प्रसादाय यत्र हि नाम गृहीतो अवदातवसनो काशिकशुचिवस्त्रधरो चन्दनानुलिप्तकगात्रो अंगदी कुण्डली एवमेवरूपं धर्मं साक्षीकरोति ॥

अथ खलु भगवां ताये वेलाये यशोदं श्रेष्ठिपुत्रं आरभ्य इममुदानमुदानये ॥

न मुण्डभावो न जटा न पंको
नानासनं स्थण्डिलशायिका वा ।
रजोजलं वोत्कुटुकप्रहाणं
दुःखप्रमोक्षं न हि तेन भोति ॥
अलंकृतो वापि चरेय धर्मं
क्षान्तो दान्तो नियतो ब्रह्मचारी ।
सर्वेहि भूतेहि निवार्य दण्डं
सो ब्राह्मणो सो श्रमणो स भिक्षुः ॥

4. BM °âvibhâvam̃ ti(M °van ti)robhâvam̃ tiroku° M °kudyan tiroçai° B °kudyam̃ tiroçailyam̃ tiropa°. — 5. B °dati ça° M °dati çeyyâm a° B °lpayati | patita°.

7. M °khalu anyatîrthikacanakaparivrâjakâ te daṇḍi° B °vrâjakâ tredaṇḍi° BM °trakagauttamadharmaci° B °ddhaçrâkatri ° kshibhaginî çravaṇâ° M °gini çravaṇâ° B °çreshṭipu° M °çreshṭiputrakasya imâni evam̃rûpâni vividhâ ° shṭaromajâto abhûnsuḥ | yâvat svâ° BM °gauttamasya° B °rmavinaye vivṛi° BM °lohitiko ham̃ arthikarmâya(M °kamârya) alam̃ prasâ(B °pramâ)dâya yatra° B °gṛihîtâ a° M °dâtaçca vasano ° tro aṅgadî kuṇḍala e° BM °dharma sâ°.

14. M °gavân tâye ve° BM °çreshṭipu° M °imam udânaye || . — 15. B °pam̃kâ nânâsanâ thaṇḍilaçâyinâ vâ ra° M °pam̃kâ nânâsanârthadiraçâyino kâ°.

17. M kâlayâjalam̃ vo utkutukaprahâ° B °lam̃ vo utku ° tena bhavati a° M °tena bhavati | . — 19. M °dharmakshonto dâ°.

21. B °hmaṇaçra° M °hmaṇaçravaṇo sa°.

अथ खलु भगवां यशोदस्य मातापितृणां तस्य च जनकायस्य प्रसादनीयां कथां कथये । तद्यथा दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां । अभिप्रसादयन्ति यशोदस्य मातापितरौ भगवतो सन्तिके चित्तं तं च महाजनकायं अभिंप्रसन्नचित्तो ॥ भगवां यशोदस्य मातापितृणां तस्य च महतो जनकायस्य चत्वार्यार्यसत्यानि प्रकाशयति दुःखं दुःखसमुदयं दुःखनिरोधं दुःखनिरोधमार्गं ॥ अथ खलु यशोदस्य श्रेष्ठि[395ª]पुत्रस्य मातापितॄणां तेष्वेवासनेषु निषस्राणां विरजं विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं बहूनां च प्राणिसहस्राणा। अधिगता च धर्मा ॥ ते पुनर्यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ भगवन्तमेतदवोचत् ॥ प्रव्राजेहि भगवं यशोदं श्रेष्ठिपुत्रं उपसंपादेहि सुगत यशोदं श्रेष्ठिपुत्रं ॥ अथ खलु भगवां एहिभिक्षुकाये आभाषे । एहि भिक्षु चर तथागते ब्रह्मचर्यं ॥

अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य भगवता एहिभिक्षुकाये आभाष्टस्य यत्किंचिद्गृहिलिंगं गृहिगुप्तं गृहिध्वजं गृहिकल्पं सर्वमन्तरहाये त्रिचीवरं चास्य प्रादुर्भवेत्सुंभकं च कंसपात्रं प्रकृतिस्वभावसंस्थिता च केशा ईर्यापथो चास्य संस्थिहे तद्यथा नाम वर्षशतोपसंपन्नस्य भिक्षुस्य । एषा आयुष्मतो यशोदस्य श्रेष्ठिपुत्रस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥

समाप्तं यशोदस्य श्रेष्ठिपुत्रस्य वस्तुं ॥

भिक्षू भगवन्तमाहन्सुः ॥ कस्य भगवन् कर्मस्य विपाकेन यशोदो श्रेष्ठिपुत्रो आढ्यो महाधनो महाभोगो श्रेष्ठिकुले उपपन्नो क्षिप्राधिगमो च गृहस्थभूतेनैव ब्रलवशीभावं प्राप्तं ॥ भगवानाह ॥ एतस्यैव भिक्षवो यशोदस्य श्रेष्ठिपुत्रस्य पूर्वप्रणिधानं ॥

1. M °çodasya çreshṭiputrasya mâ°. — 2[1]. BM tadyathâ || dâ° BM °vipâ(B °pâka)kathâm̃ abhi°. — 2[2]. B °sâdayanti | yaço° M °gavato bhagavato santike cittam̃ ca ma° BM °tto bha°. — 4. BM °çayati | duḥkasamudayam̃ duḥkhanirodhamârgam̃ || .

6. BM °çreshṭipu° B °ṇâm̃ teshvavâ° M °sharṇṇânâm̃° B °sharṇṇânâm̃ vigatam̃ vigatamalam̃° BM °bûṇâm̃ ca prâ° B °srâṇi a° M °srâṇâ a° BM °rmâ ca pu°. — 8[1]. B ca puna° M ca punaḥ yaço° BM °çreshṭipu° M °pita bha°. — 8[2]. BM pravrajahi bhagavâm̃ yaçodam̃ çreshṭiputram̃ u° B °sugatam̃ yaço° BM °çreshṭipu°. — 9. M °she | ehi bhikshu caratha tathâ°.

11. BM °trasya bhagavato e° B °âbhâshṭhasya yat kim̃° BM °d grihaliṁgam̃ grihi(B °griha)gu° M °lpam̃ ayam anta° BM °rbhavetsuḥ sum̃bhakam̃° B °ca kam̃ ca pâtram̃° M °svabhâvam̃ sam̃sthitâ ca keçâ iryyâpathe câ° B °çâ iryâ °sthihe | tadyathâ | nâ ° kshusya e°. — 14. BM °çreshṭipu° M °kshurbhâvaḥ || .

16. M iti çrimahâvastuavadâne yaço° BM °çreshṭipu° M °stum̃ samâptam̃ || . — 17[1]. M bhirkshu bha ° hatsuḥ || . — 17[2]. B °bhagava karma° BM °do çreshṭipu° M °âdyo mahâdha° BM °çreshṭiku° M °dhigato ca gri°. — 19[2]. B °syaicaiva bhi° M °syaisha evam̃ bhi° BM °çreshṭipu°.

भूतपूर्वं भिक्षवो इहैव वाराणस्यां नगरे क्षीणकुलपुत्रो अभूषि कृच्छ्रवृत्तिको दरिद्रो परकर्मेण वृत्तिं कल्पयति बुद्धानां चानुत्पादाय प्रत्येकबुद्धा लोके उत्पद्यन्ति बुद्धानामन्तरा दक्षिणेया तूष्णीकशोभना एकचरा खड्गविषाणकल्पा एकमात्मानं दमेन्ति परिनिर्वापयन्ति दक्षिणीया पुण्यक्षेत्रा ॥ ततो भद्रिको नाम प्रत्येकबुद्धो ऋषिवदनातो कल्यस्यैव निवासयित्वा पात्रचीवरमादाय नातिकाले नातिविकाले समये प्रातरासे वर्तमाने वाराणस्यां नगरे पिण्डाय प्रविष्टो सुसंवृतो कायेन सुसंवृतो वाचाय सुसंवृतो मनेन सूपस्थितिकाय स्मृतिये समाहितो एकाग्रचित्तो सुसंवृतेन्द्रियो ॥

सो दानि वाराणसीनगरे पिण्डाय चरन्तो तेन क्षीणकुलपुत्रेण पुरुषेण दृष्टो । प्रासादिकाभिप्रसन्ना देवमनुष्या तस्य क्षीणकुलपुत्रस्य पुरुषस्य । भद्रिकं प्रत्येकबुद्धं दृष्ट्वा अतीव मनं [395a] प्रसन्नं प्रसन्नचित्तेन गृहं प्रवेशेत्वा गृहे आहारेण प्रतिमानितो एवं चानेन प्रणिधानमुत्पादितं यं एदृशे दक्षिणेये अधिकारं कृत्वा कुशलमूलं मा कांचिद्दुर्गतिं वा विनिपातं वा गच्छेयं मा वा कदाचिद्दरिद्रेषु कुलेषूपपद्येयं आढ्येषु महाधनेषु महाभोगेषु कुलेषूपपद्येयं ॥ सो दानि भद्रिको प्रत्येकबुद्धो इममेवरूपं प्रणिधानं विदित्वा हंसराजा विय वैहायसेन प्रक्रान्तो ॥ सो दानि पुरुषो तं भद्रिकं प्रत्येकबुद्धं वैहायसेन हंसराजा विय विक्रमन्तं दृष्ट्वा च तस्य प्रत्येकबुद्धस्य स्पृहयन्तो भूयो प्रसन्नचित्तो प्रणिधानमुत्पादेति । एतेषां धर्माणां लाभी भवेयं येषामेष प्रव्रजितो धर्माणां लाभी ॥

भगवानाह ॥ एष भिक्षवः यशोदो श्रेष्ठिपुत्रो तेन कालेन तेन समयेन इह वा-

1. M °pûrva bhikshavaḥ i° B °kshinaku° M °shi | kricchravrishṭiko ° na vrishṭim̃ kalpa° BM °nâm̃ câ(M °nâm̃ vâ)nupâdâye pratye ° dyanti(M °dyati) | buddhânâm antaro dakshiṇeyo tû° B °ekavarâ kha° M °lpâ | ekam ânmânam̃ dameṭi parini° B °tmânam̃ dayenti paninirvâ ° ṇyakshatrâ | . — 4. M tataḥ bhadrikâ nâma pratye° B °buddhâ ṛi° M °ṛishipatanâto kâlyasyai° B °danâto kâlasyai° BM °dâya nâniyâtikâle nâtivikâle samaye(B °same) prâtarâsam̃ vartta° B °shṭo susam̃vritâ kâye° M °shṭo susam̃vṛito vâvâya susam̃vṛito manena supasthi° BM °smṛitisamâ° B °tto susam̃vṛittendriyo || .

9. M °râṇasyâm̃ naga ° kshînaku° BM °shṭo prâ°. — 10[1]. B °diko bhipra° M °sanno de° BM °shasya bha°. — 10[2]. B °nam̃ prasanne citte ° tvâ griham̃ âhâre° M °tvâ gṛiham âhâre ° tpâditam̃ yam edṛi ° kshiṇoyam̃ adhi° B °ṇeyam̃ adhikâram̃ kṛi° M °mûla mâ kaçci durga° BM °dreshu kuleshu papadyam̃ âdye(B °shûpapadyevam̃ âḍhye)shu mahâdha°.

14. B °jâ visha vai°.

16. M °ddham̃ vihâyasena ham̃sarâjâ viya vaihâyasena viya vikra ° spṛihayam̃to bhû°. — 17. BM eteshâm̃ dharmâṇâm̃ lâbhi(B °bhi) bhaveyam̃ teshâm e(M °shâm̃m e)sha pra° M °rmâlâṇâ lâbhî || . — 19[2]. M °kshavo yaço° BM °çreshṭiputro te° M °samaye i°.

राणस्यां नगरे श्रीणकुलपुत्रो अभूषि । यं सो तत्र प्रत्येकबुद्धे अधिकारं कृत्वा प्रणिधानमुत्पादितं तस्य कर्मस्य विपाकेन तदुपादाय न कदाचिद्दुर्गतिविनिपाते-षूपपन्नो मनुष्येषु च्युतो देवेषु देवमहेशाख्यो उपपन्नो देवेषु च्युतो मनुष्यमहेशाख्यो उपपन्नो इहैव च नं पश्चिमे जन्मे तथागतं आरागेत्वा बलवशीभावं प्राप्तो ॥

यशोदजातकं समाप्तं ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे । तत्र खलु भगवां आयुष्मन्तां पंचका भद्रवर्गीया-नामन्त्रयति ॥ मुक्तो हं भिक्षवः सर्वपाशेहि ये दिव्या ये च मानुषा । चरथ भि-क्षवः चारिकां मा च दुवे एकेन अगमित्थ ॥ सन्ति हि भिक्षवः सत्वाः शुद्धा अल्परजा अपरोक्षजातिका ते च अश्रवणत्वाद्धर्माणां परिहायन्ति । अहं पि गंसे येन उरुविल्वायां सेनापतिग्रामकं जटिलानामनुकंपाय ॥

अथ खलु मारस्य पपिष्ठस्यैतदभूषि ॥ अयं खु श्रमणो गौतमो वाराणस्यां विहरति ऋषिवदने मृगदावे सो पंचकां भद्रवर्गिकां भिक्षूनामन्त्रयति मुक्तो हं भिक्षवः सर्वपाशेहि ये दिव्या ये च मानुषा यूयमपि भिक्षवः मुक्ताः सर्वपाशेहि ये दिव्या ये च मानुषाः चरथ भिक्षवः चारिकां मा च एकेन दुवे अगमि[396ᵃ]त्थ सन्ति भिक्षवः सत्वा अल्परजा अपरोक्षजातिका अश्रवणत्वाद्धर्माणां परिहायन्ति अहं पि गंसे येन उरुविल्वायां सेनपतिग्रामकं जटिलानामनुकंपाय यं नूनाहं उप-

1. BM yo so° M °buddho adhi ° kena tadupâyena kaçci durgatavinipâteshupapannâ ma° heçâkhyeshupapanno deveshu cyuto ma ° papannâ iha vanam̃ paçci° B °shyeshu cyu ° cyuto manukhyo mahe ° haiva vanam̃ paççime jatme tathâ° M °ârâdhetvâ ba° B °prâptam̃ ‖ . — 5. M iti çrîmahâvastuavadâne yaço°.

6. M bhagavân sam̃mya° B °to tadartham̃° M °shipattane mri° B °dâve ta°. — 7. M °ga-vân âyushmantânâm̃ pam̃cakâ bhadra° B °shmantam̃ pam̃° M °rgiyâm âma°. — 8¹. M °kshavo sa° B °vyâ ye ye ca mânushâ ca° M °shâ yûyam̃ api bhikshavo muktâ sarvapâçehi ye divyâ ye ca mânushâ ye ca°. — 8². M ye cara bhi° B carati bhi° BM °rikâ mâ(M °mo) ca du° B °kena âgamittha sam̃° M °kena agamirshya. — 9. B sam̃sthihi bhi° M °bhikshavo satvâḥ° B °lparajo aparokshajâtika tvâya açra° M °rokshajâtiko açravaṇatvâ dharmâ° BM °hâ-yati a°. — 10. M aham̃ game ‖ yena uluvi° B °gam̃se | ye ° lvâyam̃ senâ° BM °grâmakâ ja° M °ṭilonâ°.

12¹. BM °pâpisthasyai°. — 12². M °khu çravaṇo çauttamo° BM °syâm̃ viharati | ṛi° M °shipattane mṛi ° ve ‖ so pam̃cakâ bhadra° BM °bhikshuṇâm âmantrayati ‖ mukto ° shâ(M °shâye) | yû° M °vyâ ye mânushâḥ ° kâm̃ mâ cara ekena duve agamishyam̃ | santi bhi° B °ttha | santi bhi° M °vaḥ satvâ çuddhâ alpa ° jâtiko açravaṇatvâ dharmâṇâm̃° BM °hâyati | aham̃ pi gam̃se yena uru(B °ulu)vilvâ° M °grâmikam̃ jaṭilonâm anukam̃pâye ‖ yam̃ nû° B °nukam̃pâya ‖ yam̃ nû° M °rmâye ‖ .

संक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां भगवन्तं गाथाये ध्यभाषे ॥

अमुक्तो मन्यसे मुक्तो किं तु मुक्तो ति मन्यसि ।
गाढबंधनबद्धो सि न मे श्रमण मोक्ष्यसि ॥

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

मुक्तो हं सर्वपाशेहि ये दिव्या ये च मानुषा ।
एवं जानाहि पापीमं निहतो त्वमसि अन्तक ॥

अथ खलु मारो पापीमां जानाति खलु मे श्रमणो गौतमो त्ति दुःखी दुर्मनो विप्रतिसारी तत्रैव अन्तरहाये । इत्यमेतं श्रूयति ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे शास्ता देवानां च मनुष्याणां च । अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेवंरूपो चेतसः परिवितर्को उदपासि । कामा अनित्यदुःखविपरिणामधर्मा ॥ अथ खलु मारस्य पापीयस एतदभूषि ॥ अयं श्रमणो गौतमो वाराणस्यां विहरति ऋषिवदने मृगदावे तस्यैकस्य रहोगतस्य प्रतिसंलीनस्य अयमेव चेतसः परिवितर्को उदपासि कामा अनित्यदुःखविपरिणामधर्मा यं नूनाहं उपसंक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये ध्यभाषे ॥

दृढो नाम मया पाशो चरति मानसं तव ।
तेन त्वां बन्धयिष्यामि न मे श्रमण मोक्ष्यसि ॥

1. M °thâye 'dhya°. — 2. BM °se mukto kiṁ tu(M °kim tu) mukto si ma°. — 3. M gâḍhabandha ° çravaṇa° BM °mokshasi ‖. — 4. M °gavân mâ ° pimâṁ gâ°. — 5. M °vyâ hi ca mânushâḥ e°.

6. M °piyaṁ ni ° ntako ‖ B °ntakaṁ ‖. — 7. M °çravaṇo gauttamonti duḥkhi durma° B °monti duḥ° M °traivântarhito B °hâye e°. — 8. B ettha° M itham evaṁ çrû° B °taṁ çruyati ‖. — 9. M bhagavâṁ samya° B bhagavân saṁmya° M °to tam arthaṁm abhi° B °bhisaṁvâdayi° BM °ti | rishi°. — 10. M °ekaraho ° m evarû ° udupâsi.

11. M kâmâ parivitarka ani° B °dharmâ a° M °dharmaḥ ‖. — 12. M °pimâṁ saita°. — 13. M °çravaṇo gauttamo ° rishipattane mri° B °lînasya ayam evaç cetasaḥ paritarko udapâyi | kâ° M °cetaso parivittarko udupâsi | kâmo ani° B °nityaduḥkhâ vipariṇâmadharmo yaṁ nû° M °dharmo ‖ atha khalu mâro pâpîmâṁ yaṁ nû ° vicakshuḥka°. — 15. M °thâye 'dhyabhâshaḥ ‖.

17. M dṛiḍho nâma mayo pâṇo carati mânase B °mânasa te | . — 18. BM na tvaṁ va(M °vu)ccayishyâ° M °çravaṇa mokshasi ‖.

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

पंचकामगुणे लोके मनः षष्ठं प्रवेदितं ।
तत्र मे विगतो छन्दो विध्वस्तो विनलीकृतो ।
एवं जानाहि पापीमं निहतो त्वमसि अन्तक ॥

अथ खलु मारस्य पापीयस एतदभूषि । जानाति खलु मे श्रमणो गौतमो ति । दुःखी दुर्मनो विप्रतिसारी तत्रैवान्तरहायि । एत्थं एतं श्रूयति ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थमभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे ॥ अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेव चेतसो परिवितर्को उदपासि [396b] उपधिरनित्यो दुःखो विपरिणामधर्मो ति ॥ अथ खलु मारस्य पापीयस एतदभूषि ॥ श्रमणो गौतमो वाराणस्यां विहरति ऋषिवदने मृगदावे एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेवरूपो चेतसः परिवितर्को उदपासि उपधिरनित्यो दुःखो विपरिणामधर्मो ति यं नूनाहं उपसंक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये ध्यभाषे ॥

नन्दति पुत्रेहि पुत्रिमां
गोमिको गोहि तथैव नन्दति ।
उपधीहि नन्दति जनो
न हि सो नन्दति यो निरुपधि ॥

1. M °gavân mâraṁ pàpi gâ°. — 2. M °guṇopeto manaḥ° BM °shashṭhà pravedità | . — 3. B °sto virali° M °sto vilalíkṛitâḥ | . — 4. M °jânâmi pâ ° hata tva° BM °antakaḥ | . — 5¹. M °píyasyaita°. — 5². M jànâmi kha ° çravaṇo gauttamo ti B °mo ti duḥ°.

6¹. M duḥkhi du° B °hâyi e°. — 6². BM °taṁ çruya°. — 7. B bhagavàn saṁmya° M °ksaṁbodhi ya° BM °harati || ṛi°. — 8. M °ekatya raho° B °cetasa parivitarko udupàsi upadhi° M °rko udupâsi | upadhi° BM °duḥkhâ vipari° M °dharmeti || . — 10¹. M °pìmaṁ etad a°. — 10². M çravaṇo gauttamo° B °harati | ṛi° M °ṛishipattane mṛi ° ekarasya raho ° pratisaṁlayanasya ąyam evarûpaç cetasa parivitarka udupàsi upadhi° B °rko udupâsi | upadhi° BM °rmo ti | yaṁ nû°.

13. BM °pîmaṁ(M °pimí) yena bhagavàṁste(M °vânste)no° M °gavaṁta gâthâye adhya° B °she na°. — 15. B nandati | putre° BM °mâṁ gopiko gopí(M °pi)hi ta ° ndati u°.

17. B upadhìti(M °pavìthi) nandati ja° M °rupadhiḥ | .

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

सोचति पुत्रेहि पुत्रिमां
गोमिको गोहि तथैव सोचति ।
उपधीहि जनो प्रबाधितो
न हि शोचति यो निरुपधिः ॥

अथ खलु मारो पापीमां जानाति मां श्रमणो गौतमो ति दुःखी दुर्मनो विप्रतिसारी तत्रैवान्तरहाये । इत्यमेतं श्रूयति ॥

सुविमलविमलस्य निर्मलस्य शुचिस्य
भगवतो ऽमलवर्णो कीर्तितो गौतमस्य ।
तमरहितं प्रदेशं सर्वसत्वान देति
सर्वजगतः क्रियाभिर्निर्वृतिं प्राप्नुणेति ॥

भिक्षू भगवन्तमाहन्सुः ॥ कथं भगवानुदानं भाषति ॥

यस्मिं न माया वसति न मानं
यो वीतरागो अनिघो निरासो ।
प्रनुन्नक्रोधो अभिनिर्वृतात्मा
सो ब्राह्मणो स श्रमणो स भिक्षुः ॥

अस्माभिरपि भगवन् कथं पिण्डाय चरितव्यं भवति भिक्षां देहीति ॥ भगवानाह ॥ न होति तूष्णीभूतेन उद्देशेन स्थातव्यं । एवमार्याणां याचनं ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने इहैव वाराणस्यां नगरे राजपुत्रस्य अस्थिसेनो नाम पुरोहितपुत्रो वयस्यो । सो कामेषु आदीनवं दृष्ट्वा परिव्राजकप्रव्रज्यां प्रव्र-

1. M °bhagân mâ° BM °mâro yam̃ viditvâ mâram̃ pâ° B °bhâshe so°. — 2. BM soceti putre ° mâm̃ gopibhis tathaiva ca socati | (M °ti) u°. — 4. M upadhihi janâ prabodhitâ na hi° B °janâ praçodhito ° rupedhiḥ ||.

6. M °çravaṇo gauttamo ti duḥkhi daumanâ tatrairvânta° B °rmano tatrai° BM °hâye i°. — 7. BM °tam̃ çruya°. — 8. M suvimalavimalasya çu° BM °gavato mâyâvarṇṇo° B °gauttasya | M°gauttamasya. — 10. B tam ahasito pra° M tam ahasitasya pra° BM °desi sarvajagatakṛitsnâbhir nirvṛitim̃(M °ttim̃) prâ°.

12[1]. M bhikshu bha ° m âhamsuḥ || B °hatsuḥ ||. — 12[2]. B kam̃ bha°. — 13. BM yasmim̃ gayâyâm̃ vasati ta mânam̃°. — 15. BM pratanukrodho(M °dhe) a° M °rvṛitâtma so° B °hmaṇo 'çra° M °hmaṇo açravaṇo sa bhikshuḥ.

17[1]. BM °gavân katham̃°. — 19. M °tîtam adhyânam̃ i° BM °sya so°. — 20. M °jitaḥ kau ° pathe samâdâ° B °dânavartti°.

जितो कौमारब्रह्मचारी दशकुशलपथसमादायवर्ती वेदपारगो परिव्राजकशास्त्रेषु गतिंगतो ॥ सो दानि राजपुत्रो राज्यप्राप्तो सो तं अस्थिसेनं पुरोहितपुत्रं गाथाये अध्यभाषे ॥

नैव द्विषन्ति सप्रज्ञा अस्थिसेन वनीपकं ।
ब्रह्मचारि प्रियो मे सि याचे ब्रह्मे यदिच्छसि ॥

अथ खलु भिक्षवो अस्थिसेनो वनीपको गाथाये प्रत्यभाषे ॥

याचेन्तो अप्रियो भवति अदेन्तो भवति अप्रियो ।
तस्माद्भवन्तं न याचामि मा मे विद्वेषणा भवेत् ॥

अथ खलु भिक्षवः स काशिराजा अस्थिसेनं वनीपकं गाथाये प्रत्यभा[397a]षे ॥

यो हि याचनको सन्तो याचितव्यं न याचति ।
परं च पुण्यं त्याजेति आत्मना च विहन्यति ॥

अथ खलु भिक्षवः अस्थिसेनो वनीपको तं काशिराजं प्रत्यभाषे ॥

याचनां रोदनमाहु अदानं प्रतिरोदनं ।
तस्माद्भवन्तं न याचामि मा मे आरोदनं भवेत् ॥
न वै याचति सप्रज्ञो नार्यो वेदितुमर्हति ।
उद्देश आर्या तिष्ठन्ति एषा आर्याण याचना ॥

अथ खलु भिक्षवः स काशिराजा अस्थिसेनं वनीपकं गाथाये प्रत्यभाषे ॥

ददामि ते ब्राह्मण रोहिणीनां
पूर्णं सहस्रं सह पुङ्गवेन ।

4. M naivaṁ visha ° jñâ adhisenaṁ va° B °jñâ sasthisenaṁ va° BM °kaṁ bra°. — 5. BM °câri(M °ri) priyâ me si yâci brahme° M °yadicchasi | .

6. M °seno purohitaputro taṁ kâçirâjaṁ gâ° B °nipakaṁ gâ°. — 8. M °d bhavanto yâcemi° B °vantaṁ yâcâ°. — 9. M °kshavo sa°. — 10. M °vyaṁ na câti || .

11. BM °ṇyaṁ tyaje°. — 12. M °nipakaṁ taṁ°. — 13. M yâcanaṁ rodamânâhuḥ adâ° B °rodanâm âhu || a°. — 14. BM °d bha(B °bhaga)vantaṁ° BM °me aro yâ°. — 15. M na ca vai ° prajñâ âryave° B °prajña âryo°

16. M °ddeçe âryâ ti° B °esho âryâ° M °esho âryeṇa yâcanât || . — 17. M °bhâshati | . — 18. B °hmaṇa puro° M °hmaṇa purohitânâṁ pûrṇṇasahasraṁ ahapuṁgavena | B °pûrṇṇasahasraṁ mahatpuṅga°.

आर्यो हि आर्यस्य कथं न द्या
श्रुत्वान गाथां कथितां सुभाषितां ॥

भगवानाह ॥ नान्यो भिक्षवस्तदा स काशिराज्ञो अस्थिसेनो नाम पुरोहितपुत्रो परिव्राजको वयस्यो अभूषि । अहं स तदा अस्थिसेनो परिव्राजको अभूषि ॥

अस्थिसेनस्य जातकं समाप्तं ॥

भगवानाह ॥

न वे याचति सप्रज्ञो नार्यो वेदयितुमर्हति ।
उद्दिश्य आर्यास्तिष्ठन्ते एषा आर्याण याचना ॥

एवं भिक्षवः पिण्डचारं चरितव्यं ॥ ते दानि भिक्षू भगवन्तमाहन्सुः ॥ किमस्माभिर्भगवं भिक्षाये लब्धाये वक्तव्यं स्वस्ति स्वस्तीति ॥ भगवानाह ॥ न भिक्षवो युष्माभिरादिशितव्यं भिक्षायां लब्धायां ।

सर्वपापस्याकरणं कुशलस्योपसंपदा ।
स्वचित्तपर्यादापनं एतद्बुद्धानुशासनं ॥

ते दानि भिक्षू ऋषिवदने मृगदावे वर्षोषिता दिशोदिशं चारिकां प्रक्रान्ता ॥ ऋषिवदने देवता तेषां भिक्षूणां स्थानानि चंक्रमाणि निषद्यानि शय्यानि शून्यानि निरभिरम्याणि दृष्ट्वा रतिं अविन्दन्ती येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये प्रत्यभाषे ॥

अरति मे विषये व ख्यायति
शून्यं दृष्ट्व विविक्तमानुषं ।

1. B âryâ hi° BM °thaṁ nuda ° thâṁ bhavimaṁ su°. — $3^2$. B nânye bhi° M °kshavo tadâ ° râjñâ sasthi° B °râjâ asthi° M °hitabuddho pari°. — 4. M °seno nâma pa ° jaka a°. — 5. M iti çrîmahâvastuavadâne asthi°.

7. BM nâryo(B °ryâ) vedayati nâryo ve° B °yituṁm arhasi | . — 8. M °çe âryyâ tishṭhante | e°. — $9^1$. M °kshavo pi°. — $9^2$. M °bhikshur bhagavantam âhaṁsuḥ || B °vantaṁm â°. — $9^3$. M °smâbhiḥ bhagavan bhikshâ°. — $10^2$. M °shmâbhiḥ rodisitavyâ bhikshâ° B °çitavyâ bhikshâ°.

12. M °çalasyâpasaṁ°. — 13. B °ryâdamanaṁ e° M °ryyâdamanaṁ e°. — 14. B °kshû rishi° M °ṛishipattane mṛi ° rshopitâni diço diçaṁ corikâṁ° B °prakântâ ṛi° — 15. B ṛishivadano de° M °devatâs teshâṁ ° sthânâni nishadyâni çayyâṇi çû ° ndati | yena bhagavân teno° B °ndanti yena bhagavâṁ°.

18. B aratîya viya me yanya khyâyati çûnyâṁ dṛishṭvâ viviktamânasâṁ | M arativa vishayamanyâ âkhyâyati | çûnyâṁ dṛishṭvâ viviktamânasâṁ | .

ते चित्रकथा बहुश्रुता
कहिं ते गौतम श्रावका गता ॥

भगवानाह ॥

मगधां गता कोशलां गता
वज्जिभूमिं च अथापरे गता ।
मृगका व असंगचारिणो
प्रविविक्ता विहरन्ति भिक्षवः ॥

भगवां प्रस्थितो । नाविकेन भगवन्तं दृष्ट्वा गंगातीरमुपसंक्रमन्तं नावा अल्लीपिता ॥ भगवां नावमारुह्य नाविकमाह ॥

सिंच भिक्षु इमां नावां मैत्राये सिक्ता ते लघु भेष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
सिंच भिक्षु इमां नावां करुणाय सिक्ता ते लघु भे[397b]ष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
सिंच भिक्षु इमां नावां मुदिताय सिक्ता ते लघु भेष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
सिंच भिक्षु इमां नावां उपेक्षाये सिक्ता ते लघु भेष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
मैत्राविहारी यो भिक्षुः प्रसन्नो बुद्धशासने ।
अधिगच्छति पदं शान्तं असेचनं च मोचनं ॥
करुणाविहारी यो भिक्षु प्रसन्नो बुद्धशासने ।
अधिगच्छति पदं शान्तं अपृथग्जनसेवितं ॥
मुदिताविहारी यो भिक्षु प्रसन्नो बुद्धशासने ।

1. M te cittakathâ° B °trakathâm̃ ba° M °gauttama çrâ°. — 4. M sagadhâm̃° BM °koçalâ gatâ vajrî(M °vaji)bhûmim̃ ca ‖ a ° gatâ mṛi°.

6. B °gakâm̃ ca asam̃° M °gakâm̃ ca nam̃ aṅgacâ° B °prativiviktâ°. — 8[1]. M bhagavân pratisthito ‖ . — 8[2]. M nâkitena bha°. — 9. M °gavâ nâvam ârûbya°. — 10. M °maitrâya si° BM °ktâye la° B °ghu bhoshyati ‖ .

11. B cchitvâ râ° M cchinvâ râ° BM °shyati | . — 12. M °kshur imâm̃ ° ṇâ siktâ la°. — 13. M citvâ râ° B cchitvâ râ ° shyati | M °shyati | mai° (*l.* 18). — 15. B cchitvâ râ°.

16. B °ktâye laghu te bhe°. — 17. B cchitvâ râ ° shyati | . — 18. M °hâri yo bhikshu pra°. — 19. BM °cchanti pa° B °secanamo°. — 20. M °hâri yo bhikshuḥ pra°.

21. B °cchanti pa° M °cchantu pa ° ntam̃ pṛithagjanasevanam̃ ‖ . — 22. M °hâri yo bhi ° çâsano | .

अधिगच्छति पदं शान्तं अकापुरुषसेवितं ॥
उपेक्षाविहारी यो भिक्षु प्रसन्नो बुद्धशासने ।
अधिगच्छति पदं शान्तं निर्वाणं पदमच्युतं ॥
धर्मारामो धर्मरतो धर्ममनुविचिन्तयं ।
धर्मं समनुस्मरं भिक्षु सद्धर्मान्न परिहायति ॥
उदग्रचित्तो सुमना अभिभूय प्रियाप्रियं ।
ततो प्रामोद्यबहुलो भिक्षु निर्वाणसन्तिके ॥
न शीलव्रतमात्रेण बाहुश्रुत्येन वा पुनः ।
अथ वा समाधिलाभेन प्रान्तशय्यासनेन च ॥
स्पृहयं नैष्क्रम्यसुखं अपृथग्जनसेवितं ।
भिक्षु विश्वासमापद्ये अप्राप्ते आश्रवक्षये ॥
भिक्षु न तावता भवति यावता भिक्षते परां ।
विषमां धर्मां समादाय भिक्षु भोति न तावता ॥
यो च कामां च पापां चाधिहत्वा ब्रह्मचर्यवां ।
निःश्रेणीभूतो सम्प्रज्ञो स वै भिक्षूति वुच्चति ॥
यतो चरे यतो तिष्ठे यतो आसे यतो शये ।
यतो संमिंजये कायं यतो कायं प्रसारये ॥
यतयायी यतसेय्यो अस्या
यतसंकल्प ध्यायि अप्रमत्तो ।

1. M °daṁ çâ apṛithagjanasevitaṁ ‖ muditâvihâri yo bhikshu prasanno buddhaçâsane | adhigacchati padaṁ çântaṁ akârapuru°. — 2. M °hâri yo°. — 4. BM karmârâmo karmarato karmam anu° B °cintitaṁ | M °cintiyaṁ | . — 5. M °bhikshuḥ saddharmân pari° B °kshu saddharmâ°.

6. B udacitto° M udayacitto° B °bhûta abhibhûya pri°. — 7. BM °to pramo° M °dya aprâpte sanirvâ° B °hulâ bhikshû nirvâṇasya sontike | . — 8. M °ṇa bahuçrutena°. — 9. BM atha so samâ° M °lâbhanto prânte çaryyâsa°. — 10. B griheya nai° M spriheya nai°.

11. B °pte açra°. — 12. B bhikshû na tâ° M bhikshuṇa tâ ° yâvatte ca bhi° B °yâvate bhi° BM °bhikshu parâṁ | . — 13. B °dharmâ sa ° bhikshû bho° M °bhonti na°. — 14. M °mâṁ pâ ° hmacaryyaṁ vâ | B °hmacaryaṁ vâ | . — 15. M niççreṇî ° jño sarve bhi° B °vai bhi ti vu°.

16. B yataṁ careya tan tishṭheya tam âseya taṁ çayeya | M yattaṁ careya taṁ nishṭheyato mâseyato yaçaṁ | . — 17. B taṁ samijiyeya kâye yataṁ kâyaṁ pra° M taṁ samepijine kâye taṁ ca kâye pra° B °raye ya°. — 18. B yatavârî yatâsiro siyâ yatâ saṁ° M yato vâsîvataçirosi saṁ ° dhyâyî jâyatâ | apra° B °dhyâyî | apra° BM °tto a°.

अध्यायरतो समाहितो
एको संतुषितो तमाहु भिक्षुं ॥
चक्षुषा संवरो साधु साधु श्रोत्रेण संवरः ।
घ्राणेन संवरो साधु साधु जिह्वाय संवरो ॥
कायेन संवरो साधु मनसा साधु संवरः ।
सर्वत्र संवृतो भिक्षुः सर्वदुःखा प्रमुच्यते ॥

सो दानि भगवता वशीभावेन विनीतो । सिंच भिक्षु इमां नावां ति आभाष्टस्य यत्किंचिद्गृहिलिंगं गृहिगुप्तं गृहिध्वजं गृहिकल्पं सर्वं समन्तर्हितं त्रिचीवरं चास्य प्रादुर्भवेत् सुंभकं च पात्रं प्रकृतिस्वभावसंस्थिता च केशा ईर्यापथं चास्य संस्थिहे तद्यथापि नाम वर्षशतोपसंपन्नस्य भिक्षुस्य ॥ एवं आयुष्मतो गंगेयकस्य नाविकस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥

तं तर्हिं भ[398ª]गवां विसर्जयति ॥ सो दानि भगवन्तं आह ॥ यदि भगवं केनचित्पृच्छियेयं को त्वं ति किं मया भगवं वक्तव्यं ॥ भगवानाह ॥ श्रमणो पि त्वं ब्राह्मणो पि त्वं वेदको पि त्वं तारको पि त्वं पारगो पि त्वं ॥

शक्रो देवानामिन्द्रो माणवकवर्णमात्मानं ऋद्धीये अभिनिर्मिणित्वा प्रासादिको दर्शनीयो शोभनेहि जटेहि नीलेहि नीलमयूरग्रीवसंनिकाशेहि सौवर्णेन यष्टिकमण्डलुना भगवतो पात्रचीवरकुण्डिकमादाय पृष्ठतो गच्छति ॥ जनो आह ॥ को स्वायं माणवको प्रासादिको दर्शनीयो ॥ सो दानि आह ॥

यो वीरो धृतिसंपन्नो ध्यायी अप्रतिपुद्गलो ॥
अर्हन्तो सुगतो लोके तस्याहं परिचारको ॥

1. M andhyâcara ° ekâ sa° BM °bhikshuḥ || . — 3. BM cakshusâ samvaro° M °çrotena samvaraḥ | B °ṇa samvaraḥ | . — 4. B prâṇe° BM °na samvaro sâdhu sâdhu jihvâya samvaro | . — 5. B °yena samvaro sâdhu ma° BM °dhu samvaraḥ(M °ro) sa°.

6. M °tra samvaro bhi ° duḥkhâm̃ pra°. — 7[1]. BM °nîto bhi°. — 7[2]. B °bhikshuḥ | i° M °nâvâ ti âbhâtasya yat kim̃ci° B °âbhâshṭhasya yat kim̃cillim̃gam̃° M °dgṛihilinga gṛihiguptim̃ gṛihidhvajam̃ gṛihikalpam̃° B °jam̃ gṛihakalpam̃° BM °rbhavatsuḥ | (M °vetsuḥ) sum̃° M °svabhâvam̃ sam̃sthitâ ca keçâ iryyâ° B °keçâ iryâ° BM °he || tadya° M °topasampanna° BM °kshusya e°. — 10. M °bhâvaḥ | .

12[1]. BM tahim̃°. — 12[2]. M °vantam âha || . — 12[3]. B °bhagavâm̃ ke° M °bhagavân kena cin pṛicchîyeyam̃ ko tvan ti kim̃ ° gavan vakta°. — 13[2]. M çravaṇo pi tvam̃ brâ°. — 15. B °rṇṇam ânmânam̃ ṛi° M °tmânam ṛiddhî ° çobhaṇehi jaṭe° B °jatehi nîle° M °yûlagrîvehi sam̃° B °sauvarṇṇana yashṭi° B °lunâ | bha°.

18[1]. BM kasyâyam̃°. — 19. M °dhṛitisampanno ° puṅgavaḥ | B °pratipum̃galo | . — 20. B arhan suga° M | arham̃ suga°.

यो वुह्यमानं तारेति धर्मनावाय गौतमो ।
उत्तीर्णो पारगो बुद्धो तस्याहं परिचारको ॥

भगवां पि शक्रं देवानामिन्द्रं विसर्जयति ॥

अथ खलु भगवतो एतदभूषि ॥ किमधिमुक्ता जटिला जटिला खलु जटिलाधिमुक्ता ति भगवां जटिलसहस्रं अभिनिर्मिणित्वा प्रासादिकां प्रसादनीयां महेशाख्यां तेहि संपरिवारितो वैहायसेन ऋद्धीये उरुविल्वाकाश्यपस्य जटिलस्य उपसंक्रान्तो ॥ उरुविल्वाकाश्यपः सपरिवारो सार्धं पंचहि जटिलशतेहि जटिलसहस्रं दृष्ट्वा प्रासादिकां च दर्शनीयां च संकोचमापन्नो । इमं वास्माकमाश्रमं सर्वो उपस्थितो महाजनकायो आगमिष्यति ते चास्माकं अभिप्रसन्ना उरुविल्वाकाश्यपस्य ऋषिस्य सपरिवारस्य लोके समसमो नास्ति अयं च ऋषि जटिलसहस्रपरिवारो महर्द्धिको महानुभावो अद्यैवमिहाश्रमं प्राप्तो सर्वजनकायो एतस्य ऋषिस्य सहस्रपरिवारस्य महर्द्धिकस्य महानुभावस्याभिप्रसीदिष्यति । अभिप्रसन्ना च प्रसन्नाधिकारं करिष्यन्ति सत्करिष्यन्ति गुरुकरिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति अपचायिष्यन्ति मम सपरिवारस्य न तथा समन्वाहरिष्यन्ति ॥ अथ खलु भगवां उरुविल्वाकाश्यपस्य ऋषिस्य इममेवरूपं चेतसो परिवितर्कमाज्ञाय स्वयं जटिलवेशमन्तरहायितं च निर्मितं च जटिलसहस्रं ॥ अथ खलु उरुविल्वाकाश्यपो जटिलो तस्मिं जटिलसहस्रे अन्तर्हिते स्वकेन रूपेण च भगवन्तं दृष्ट्वा तथागतमर्हन्तं सम्यक्संबुद्धं विद्याचर[398b]णसंपन्नं सुगतं लोकविदं अनुत्तरं पुरुषदम्यसारथिं

1. M yo pûjyamânam̃ târe dha ° gauttamo | . — 2. M tirṇṇo° BM °ham̃ parivârako |. — 4[2]. B kim̃ adhimukti jaṭilâ jaṭilâ khalu jaṭilâ ti muktâ ti bha° M kim̃ adhimukti jaṭilo khalu jaṭilo ti muktâ ti bhagavân jaṭi ° dikam̃ pradarçanîyam̃ maheçâkhyam̃ | te° B °kâm̃ pradanîyâm̃ maheçâkhyo tehi sam̃paricârikam̃to vai° M °vârikam̃to vai° B °ddhîye uluvilvâkâçya jaṭi° BM °nto uru°.

7. M °çyapo sapari ° pam̃cahi jaṭilasahasram̃ hi dṛi ° m âpannam̃ B °nno i°. — 8. BM imam̃ câsmâkam âçrame sa° M °sarve upasthi° BM °mishyati | tenâsmâkam̃° B °prasanno u ° lokam asamasa° BM °nâsti || ayam̃° M °pto sarvejanakâ°.

12. M abhiprasam̃nnâ ca ° pûjayishyanti mama sa ° nvaharîshyanti || . — 14. M °gavân uru° B °uluvilvâ° M °idam c ° so parikitarkam âjñâpaya svayam̃ jaṭilo ve ° ntarhâyitam̃ | B °rmitam̃ jaṭi°.

16. BM °çyapo jaṭilo(M °lâ) tena jaṭilasahasreṇântarhi° M °rhanta sam̃myaksam̃° B °nnam̃ sugato lokavid anutta° BM °myaçârathim̃ ° thâgatabalehi balavâm̃ caturhi vai° M °ttamadamathaprâptam̃ nâgo viya kâritakâraṇo avahirgatena mânase° B °indriyeṇa avarhirga° M °jitendriye hradam avâccho anâviro vim̃prasanno ratnayûtham̃ vâ abhyu° B °yûsham̃ vâ abhyu ° tejarâçim̃ ° kam̃ apratishkûlam̃° M °kam̃ apratikulam̃ darçanâye B °rçanâya dṛi°.

शास्तारं देवानां च मनुष्याणां च द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतं अशीतिहि अनुव्यंजनेहि उपशोभितशरीरं अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतं दशहि तथागतबलेहि बलवन्तं चतुर्हि वैशारद्येहि विशारदं प्रासादिकं प्रसादनीयं च शान्तेन्द्रियं शान्तमानसं उत्तमदमसमथप्राप्तं परमदमशमथप्राप्तं नागो विय कारितकारणो अवहिर्गतेहि इन्द्रियेहि अवहिर्गतेन मानसेन स्थितेन धर्मताप्राप्तेन गुप्तो नागो जितेन्द्रियो ह्रदमिवाच्छो अनाविलो विप्रसन्नो रतनयूपं व अभ्युन्नतं सुवर्णबिम्बमिव प्रभासयन्तं तेजोराशिं शिरीये दीप्यमानं द्वितीयमिव आदित्यं उदयन्तं असेचनकं अप्रतिकूलं दर्शनाय । दृष्ट्वा च पुनरुरुविल्वाकाश्यपो सपरिवारो विस्मितो अभूषि । महर्द्धिको श्रमणो गौतमो महानुभावो ऽयं अहं पुनर्महर्द्धिकतरो ॥

अथ खलु सो जनकायो आगतागतो भगवन्तमुपसंक्रमेन्सुः भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेव पुरस्करेन्सुः भगवतो दर्शनेन न तृप्येन्सुः ॥ अथ उरुविल्वाकाश्यपस्य ऋषिस्य एतदभूषि ॥ अहो पुनर्मे आश्रमातो श्रमणो गौतमो अन्येन प्रक्रमेया ॥ अथ भगवानुरुविल्वाकाश्यपस्य ऋषिस्य इममेवरूपं चेतसो परिवितर्कमाज्ञाय तद्यथापि नाम बलवां पुरुषो संमिंजितां वा बाहां प्रसारये प्रसारितां वा बाहां संमिंजये एत्तकेन क्षणवीतिहारेण उरुविल्वाकाश्यपस्य ऋषिस्याश्रमातो वैहायसमभ्युद्गम्य उरुविल्वायां सेनापतिग्रामके प्रत्यस्थासि नद्या नैरंजनायास्तीरे अजपालस्य न्यग्रोधमूले ॥ अथ खलु उरुविल्वाकाश्यपस्य जटिलवृत्तेः अपगतेन जनकायेन एतदभूषि ॥ अहो पुनः श्रमणो गौतमो इहागच्छे इहागतो खादनीयं भोजनीयं परिभुंजेया ॥ अथ खलु भगवां उरुविल्वाकाश्यपस्य जटिलस्य इमं एवरूपं चेतसः परिवितर्कमाज्ञाय तद्यथापि नाम बलवां पुरुषो सम्मिंजितां वा बाहां प्रसारये प्रसारितां वा बाहां संमिञ्जये एत्तकेन क्षणवीतिहारेण अजपालस्य न्यग्रोधमूलातो वैहायसमभ्युद्ग[399a]म्य उरुविल्वाकाश्यपस्य

8. B °shi ma°. — 9. M °çravaṇo gautta mahânubhâvo yaṁ a° B °r marddhi° M °rddhiko yaṁ ‖ .

11. B °âgatâgatâ bha° BM °metsuḥ bhagavataḥ(M °to) pâ° M °tvâ bhagavantamavantam c° BM °retsuḥ bha ° pyetsuḥ ‖ . — 12. M atha khalu u ° shisyaita°. — 13. M °çravaṇo gauttamo anena pra° B °kramayâ ‖ . — 14. M atha khalu bhagavâṁ uru° B °çyapaçya ṛi° M °çyapasya çirisya i° BM °jñâya ta ° balavâṁ pu(M °vân pu)rusho samiṁjitaṁ vâ bâhâṁ prasâraye prasâritâṁ bâhâṁ sami(M° sammiṁ)jaye(M °ye | ) etta° M °vîthihâre° B °çyapapaçya ṛi° BM °vaihâyasam abhudga ° sthâsi(M °si | ) nadyâṁ nai°.

18. B °ṭilasya vṛitteḥ | pathaga° M °ṭilasya vṛito yathâga °yenaita°. — 19. M °çravaṇo gauttamo ° cche ihâgataḥ khâ°. — 20. M °gavân uru ° çyapajaṭi ° m evaṁrû ° vittarka° purushaḥ saṁ° BM °ritâṁ(M °taṁ) bâhâṁ° M °saṁmiṁja ° vîthihâre°.

जटिलस्याश्रमे प्रत्यस्थासि ॥ अथ खलु उरुविल्वाकाश्यपस्य जटिलस्य सपरिवारस्य एतदभूषि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो परसत्वानां परपुद्गलानां चित्तेन चित्तं जानाति महर्द्धिकतरा च वयं ॥ अथ खलु उरुविल्वाकाश्यपो जटिलो भगवन्तं स्वहस्तेन प्रणीतेन खादनीयभोजनीयेन सन्तर्पयति ॥ अथ खलु भगवां भुक्तावी धौतपात्र अपनीतपाणिरुरुविल्वाकाश्यपस्य ऋषिस्य जटिलस्य तं देयधर्मं इमायानुमोदनायानुमोदये ॥

अग्निहोत्रमुखा यज्ञा सावित्री छन्दसां मुखं ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखं ॥
नक्षत्राणां चन्द्रो मुखं . . . . . . . . . ।
आदित्यो तपसां ऊर्ध्वं तिर्यगधस्तपस्वतां ।
सदेवकस्य लोकस्य संबुद्धो वदतां वरो ॥

अथ खलु उरुविल्वाकाश्यपो सपरिवारो वैहायसमन्तरीक्षे स्थितो अग्निं जुहुति तेषां तमग्निं न ज्वलति तेषामेतदभूषि ॥ कस्यायमनुभावो येनाग्निर्न प्रज्वलति ; नूनं श्रमणस्य गौतमस्यानुभावेन ॥ सो दानि अग्निः प्रज्वलितो तेषामेतदभूषि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनः महर्द्धिकतरा ॥ तर्हिं अग्निस्मिं आहुतिं प्रक्षिपति न च पतति तेषामेतदभूषि ॥ कस्यायमनुभावो येनाग्निस्मिं आहुती न पतति । नूनं श्रमणस्य गौतमस्यानुभावेन । यतो सानं एवं भवति श्रमणस्य गौतमस्यानुभावो ति ततः सा आहुतिरग्निहोत्रस्मिं पतति ॥ अग्निं जुहुत्वान्तरी-

1. B °shi ma°. — 2. M °çravaṇo gauttamo° BM °tvânâm̃ parapum̃galâ(M °gavâ)nâm̃ cittena cittam̃(B °na citte) jâ ° rddhikataro ca va(B °ca ve)yam̃ | . — 3. M °gavanta svahastena khâdanî° B °khâdaṇîyabho° M °sam̃tarppayati paricârayati || . — 4. M °pânir uru ° imâm̃yânumodanâ° B °imâyânumodâyânumodaye | .

7. B °khâ yajño sâ° M °khâ prajñâ sâ° BM °sâm̃ mukhâ | . — 8. M râjâ mukham̃ cchandasânâm̃ nadî ° ro mukhâ | . — 9. BM °kham̃ âdi°. — 10. B °sâm̃ ûrddham̃ ti° M °sâm̃ urddhatiryyagdhastayovatâm̃ B °stapovatâm̃ | .

11. BM jagatâm̃ gato sa° M °devasya lo ° sam̃mukho vadatâm varaḥ || . — 12. M °lu uluvilvâ° B °junati teshâm̃° M °hvati | teshân tam̃ agnim̃ na jvaleti teshâ°. — 13. B °bhâvenâgni° M °bhâvo nâ 'gnir na°. — 14[1]. M °çravaṇasya gauttama°. — 14[2]. M °agnir prajva°. — 15[1] B maharddhi çra° M °çravaṇo gauttamo ° punar maha° BM °tarâ tam̃°. — 15[2]. B tam̃ agnim̃smim̃° M tam agnismim̃° BM °kshipata na° B °ca patanti te° M °teshâm̃ eta°.

16. BM °bhâvenâ° M °nâgnim̃ âhuti na°. — 17[1]. M °çravaṇasya gauttama° BM °vena yato°. — 17[2]. BM °bhavati | çrama(M °çrava)ṇa° M °gauttama° BM °vo ti | tataḥ (M °tato) sâ° M °âhuti agnihotresmim̃° BM °ti a°. — 18. M °tvâ anta ° shyâmîti na ° ottari° BM °tum̃ te°.

चातो ओतरिष्यामो ति न शक्नोन्ति ओतरितुं ॥ तेषामेतद्भूषि ॥ कस्यायमनुभावो येनान्तरीचातो न शक्नोम आश्रमं ओतरितुं । नूनं श्रमणस्य गौतमस्यानुभावेन ॥ यतः सानं एतद्भूषि श्रमणस्यायं गौतमस्यानुभावो ति अथ ततो अन्तरीचातो आश्रमे प्रतिष्ठिता शिविकेषु स्वकस्वकेषु निषीदिष्यामो ति न च तानि शिविकानि अद्दशेन्सुः ॥ तेषामेतद्भूषि ॥ कस्यायमनुभावो येन वयं शिविकां न दृशेम । नूनं श्रमणस्य गौतमस्यानुभावेन ॥ यतो सानं एवं भवति श्रमणस्य गौतमस्यानुभावो ति अथ तानि शिविकानि अद्दशेन्सुः ॥ तेषामेतदभू[399b]षि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतरा ॥ पानीयकरकानि आदाय उदकहारा गमिष्यामो ति न च तानि करकानि अद्दशेन्सुः ॥ तेषामेतद्भूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य । यतो सानं एवं भवति श्रमणस्य गौतमस्यानुभावो ति अथ तानि स्वकस्वकानि करकानि अद्दशेन्सुः ॥ तेषामेतद्भूषि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतरा ॥ करकानि आदाय नैरंजनां नदीं उदकहारिं गता न च शक्नोन्ति तानि करकानि भरयितुं ॥ तेषां एतद्भूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो सानं एवं भवति श्रमणस्यायं गौतमस्यानुभावो ति अथ तानि करकानि उदकेन भरेन्सुः ॥ तेषामेतद्भूषि ॥ महर्द्धिको यं श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतरा ॥ आहारं करिष्यन्ति न च शक्नोन्ति आहारं कर्तुं ॥ तेषामेतद्-

1[1]. B °shi ka°. — 1[2]. B °bhâvenânta° M °bhâvânânta ° knomar âçramam̃ ottaritum̃. — 2. M °gauttama° BM °vena ya°. — 3. M °sâtam̃ e° B °shi | çramaṇa° M °shi | çravaṇasyâ gauttamasyânu° BM °vo ti || || atha° M °tato ntarî° BM °âçramam̃ pratishṭhito çivi(B °to viçi)keshu svakasvakeshu nishidi nishidisyâmo(M °me)ti | na ca° B °tâni viçikâni addetsuḥ || M °çivikâm adda°. — 5[1]. M teshân eta° BM °shi ka°. — 5[2]. B °yam̃ viçikâm̃° M °driçâma | .

6[1]. M °çravaṇasya gauttama° BM °vena ya°. — 6[2]. M °sânam evam̃ ° çravaṇasya gauttamasyânubhâveti || a° B °ṇasyâ gautamasyânubhâveneti | atha tâni viçikâni addaçetsuḥ | M °çetsuḥ te°. — 7. B °shi ma° M °shi kasyâ° (*l.* 10). — 8[1]. B °katarâ pâ°. — 8[2]. B pânîye karakâni â ° çetsuḥ te°. — 10[1] M °bhâvam̃ nûnam̃ çravaṇasya gauttamasya. — 10[2]. M °yataḥ sâ ° bhavati | çravaṇasya gauttamasyânubhâveneti || atha° B °vo ti || atha ° çetsuḥ | M °çetsuḥ.

12[1]. M teshân eta° BM °shi ma°. — 12[2]. M °çravaṇo gauttamo ° puna maha°. — 13. M karam̃kâni â° B °dâya | nai ° hâragatâ na° M °hârim̃ gato na° BM °knoti tâ ° kâni hara°. — 14[1]. M teshâm eta° B °shi ka°. — 14[2]. M kasyânu° B °syâyanu° M °çravaṇasya gauttama°. — 14[3]. M yato sânam evam̃ ° çravaṇa ° gauttamasyânubhâveti || atha° B °vo ti | atha ° kena bhavetsuḥ te° M °kena bharayetsuḥ.

16[1]. B °shi ma°. — 16[2]. M °çravaṇo gauttamasyâyam̃ anubhâvo ti || vayam̃° BM °tarâ â°. — 17[1]. M âharam̃ kari° B °shyati | na çaknoti â° M °knoti â° B °karttum̃ te°. — 17[2]. B °shi ka°.

भूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो सानं एवं भवति श्रमणस्यायं गौतमस्यानुभावो त्ति ततः शक्नोन्ति आहारं कर्तुं ॥ तेषामेतद्भूषि ॥ महर्द्धिको श्रमणो गौतमः महानुभावो वयं पुनर्महर्द्धिकतरा ॥ छृताहारा काष्ठानि पातयिष्यामो ति उत्क्षिपितानि कुठाराणि न शक्नोन्ति निक्षिपितुं ॥ तेषामेतद्भूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो सानं एवं भवति श्रमणस्य गौतमस्यायमनुभावो ति अथ तानि कुठाराणि उत्क्षिप्तानि निक्षेपेन्सुः तानि च काष्ठानि पातयेन्सुः ॥ तेषां एतद्भूषि ॥ महर्द्धिको यं श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतराः ॥

एवं भगवां उरुविल्वाकाश्यपस्य संमुखा त्रयो भ्रातरां सपरिवारां पंचहि प्रातिहार्यशतेहि विनयेसि । पश्चिमं प्रातिहार्यं ॥ भगवां प्रतिसंलीयितुकामो उरुविल्वाकाश्यपमाह ॥ काश्यप अत्र अग्निशरणम्हि ते संलयिष्यामीति ॥ उरुविल्वाकाश्यपो आह ॥ सो गौतम अग्निशरणो अप्रवेश्यो केनचित् मनुष्येण वा अमनुष्येण वा अत्र सरणे दुष्टनागो प्रतिवसति । वयं पि तावदेतं अग्निशरणं दूरे परिवर्जेम तस्य दुष्टनागस्य भयेन ॥ भगवानाह ॥ अनुजानाहि त्वं काश्यप प्रतिसंलयिष्यामि अहमत्रा[400ª]ग्निशरणे ॥ उरुविल्वाकाश्यपो आह ॥ न ते भो गौतम अग्निशरणं अनुजानामि । अत्र दोष एव आख्यायति एतं अग्निशरणं इमानि च बहूनि तृणकुटिकापर्णकुटिकाशतानि यत्र भवां गौतमो नन्दति तत्र प्रतिलीयतु ॥ अथ खलु भगवां उत्थायासनातो उरुविल्वाकाश्यपस्याग्निशरणं

1[1]. BM °syânubhâvo(M °vaṁ) nû° M °çravaṇasya gauttamasya B °masya ta°. — 1[2]. B tayo sâ° M °bhavati | maharddhiko yaṁ çravaṇo gauttamasyânubhâvonti | tato çaknoti â° B °bhâvânti | tataḥ çaknoti â ° rttuṁ te°. — 2. B °shi ma°. — 3[1]. M °çravaṇo gauttamo mahâ° B °bhâvaṁ vayaṁ° M °punaḥ maha° BM °tarâ kṛi°. — 3[2]. B °hâro | kâshṭhâni pâṭamishyâmo ti ukshipitâ° M °shyâmeti ukshipitâ° BM °kuṭhârâṇi(M °ṇi) na° B °çaknoti nikshipituṁ te°. — 5[1]. M °çravaṇasya gauttama°. — 5[2]. M °çravaṇasya gauttamasyâyam anubhâveti || a° B °vo ti || atha tâni kaṭhâ° M °kuṭhârâ° BM °kshe(M °ksha)petsuḥ (B °tsuḥ | ) tâni na kâ° B °pâṭayetsuḥ | M °pâtayetsuḥ.

7[1]. M teshâm eta° BM °shi ma°. — 7[2]. M °çravaṇo gauttamo ° punaḥ maha°. — 9. M °gavân uru ° mukhât trayo ° hâryyâçate° B °vinamesi pa°. — 10[2]. BM °gavâm pra-(M °vân pra)tilîyatu°.

11[1]. M kâçyapo ato agni° B °pa ato agni° BM °çaraṇaṁ hi te saṁçayi°. — 11[2]. M °çyapam âha || . — 12. M °gauttamo esho agni° B °gauttamo agni° BM °veshya te(M °te |)na ke(M °kena)cit manushyeṇa vâ atra sa(M °tra ça)raṇe° M °dushṭhanâ°. — 13. M °paritarjjema | ta° B °rjema | ta ° bhavena || . — 14[2]. M °mi atrâham agniçaraṇo || . — 15[1]. M °çyapa â°. — 15[2]. M °gauttamo agni° B °gautamo agni° BM °mi a°.

16. M °dosho evam âkhyâyasi etaṁ° B °sha evam âkhyâyasi | etaṁ° M °bahuni triṇakuṭṭikâparṇṇakuṭṭikâḥ ça ° gauttamo abhinandati tatra me pra°. — 18. M °gavân utthâ° B °tthâyasanâto ° ṇaṁ prativiçi°.

